ह.पां.

॥ आथर्वणोमर्जीयटिप्पणीप्रारंभः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ श्रीपांडुरंगंसर्वांतरंगंसर्वांगमंगलं ॥ इंदिरामंदिरं वंदेवरेंदीवरसुंदरं ॥ १ ॥ गुरुश्रीतिर्मलाचार्यसूर्योमेशर्मयच्छतु ॥ स्वांतध्वांतध्वंसकर्ताधर्ममार्गप्रदर्शकः ॥ २ ॥ गुरुश्रीतिर्मलाचार्यसूनुनाकृष्णशर्मणा ॥ आथर्वणोपनिषदःश्रीमद्भाष्यमनूच्यते ॥ ३ ॥ इहखलुसंसारपारावारेनिपतितमधिकारिजनं जननीतनयमिव परमात्मतत्वज्ञानप्लवेनोद्दिधीर्षुरियमाथर्वणीमंत्रोपनिषदितिकर्तव्यतामंतरेणनतत्वज्ञानकारणतामापद्यते । अतस्तदितिकर्तव्यतारूपन्यायगर्भंभाष्यंकरिष्यन्नाचार्यःप्रारिप्सितपरिसमाप्त्यादिप्रयोजनामेतदुपनिषत्प्रतिपाद्यदेवताप्रणतिमादौ निबध्नाति ॥ आनंदेति ॥ नानिर्धारितस्वरूपस्यप्रणामोयुक्तः । नचांतरेणलक्षणंवस्तुनिर्धारणमित्यतःपुरुषोत्तमस्यलक्षणमाह ॥ अनंतशक्तिमिति ॥ अनंता देशतःकालतोवस्तुतश्चांतशून्याः शक्तयः सृष्टिस्थित्याद्यनुकूलशक्तयोयस्यसतथातमित्यर्थः । अनेनस्रष्टृत्वादीनिबहूनिलक्षणान्युक्तानि । तत्र स्रष्टृत्वंसंहर्तृत्वंच प्रजायंतेतत्र[३।७]चैवापियंतीत्यत्रोच्यते । स्थितिहेतुत्वं यस्मिन्[४।५]द्यौरित्यत्र । नियामकत्वंतु एषसर्व[६।३।४]भूतांतरात्मेत्यत्र । ज्ञानहेतुत्वं ततस्तुतंपश्यतेनिष्कलंध्याय[५।८]मानइत्यादौ । अज्ञानहेतुत्व मनीशयाशोचतिमुह्यमान[५।१]इत्यत्र । बंधकत्वंमोचकत्वंच समानेवृक्षे[५।१]इतिमंत्रे । बाह्यप्रकाशजनकत्वंच तमेवभांतमि[४।१]त्यादौ । एवंस्रष्टृत्वादिकंयथायथमेतदुपनिषत्प्रतिपाद्यमित्यूहनीयं । नचसृष्ट्यादिकरणेनास्यकिमपिप्रयोजनंशंकनीयं । आनंदरूपत्वादित्याह ॥ आनंदमिति ॥ एतच्चानंद[४।७]रूपमित्यादिनावक्ष्यते । नचैवंप्रवृत्त्यनुपपतिः । तत्स्वाभाव्यादितिभावेनानं

भाष्यं । आनंदमजरंनित्यमजमक्षयमच्युतं । अनंतशक्तिंसर्वज्ञंनमस्येपुरुषोत्तमं ।

दमितितत्तादात्म्यमुक्तं । सृष्ट्यादिकर्त्रासर्वज्ञेनभवितव्यं । तदप्यस्तीत्याह ॥ **सर्वज्ञमिति** ॥ इदमपि यःसर्वज्ञ[४।१७]इत्यादिनोच्यते। लक्षणांतरमाह ॥ **पुरुषोत्तममिति** ॥ एतच्चेदं[४]वरिष्ठं[११]मित्यत्रोच्यते । एवं षड्भावविकाररााहित्यमपिलक्षणांतरमितिभावेनजन नाभावंतावदाह ॥ **अजमिति** ॥ स्वरूपोत्पत्तिरहितंभावविकारोत्पत्तिरहितंचेत्यर्थः । एतच्चस[३।२]बाह्याभ्यंतरोह्यजइत्यनेनोच्यते । भावविकाराःषट् । उपादानधर्मिणोधर्म्यंतरात्मनापरिवर्तनरूपंजननं कलेवरवियोगरूपंमरणं अवयवोपचयोवृद्धिः अवयवापच योह्रासः धर्मावस्थाद्यंतरापत्तिर्विपरिणामः स्वोपादानमात्रत्वापत्तिरूपोविनाशश्चेति । तत्राजइत्यनेनभावविकाराख्योत्पत्तिर्निषि द्धा । इदानींमरणाभावमाह ॥ **अच्युतमिति** ॥ देहाच्च्युतोनभवतीत्यच्युतः तमित्यर्थः । एतदप्याह । यत्रामृतं[२।११]इत्यादिना । वृ द्धिरप्यस्यनास्तीत्याह ॥ **नित्यमिति** ॥ नियतैकप्रकारमित्यर्थः । एतदप्याह नित्यं[१।६]विभुमिति । नित्यंनाशशून्यमितिव्याख्या नेनस्वरूपनाशाभावोप्यनेनैवसिध्यतीतिबोध्यं । ह्रासाभावमाह ॥ **अक्षयमिति** ॥ अवयवापचयरहितमित्यर्थः । एतदप्युक्तं ब्र ह्मैवेद[४।११]ममृतंपुरस्तादित्यादिना । अत्रमंत्रे सर्वव्यापकंब्रह्मेत्युच्यते । तेनह्रासाभावोवृद्ध्यभावश्चसिद्धइतिज्ञेयं । विपरिणामाभावमा ह ॥ **अजरमिति** ॥ जरोपलक्षितकालकृतसर्वावस्थाशून्यमित्यर्थः । एतच्च दिव्योही[३।२]त्यादिनोक्तं । विनाशरूपविकाराभावोपि नित्यमित्यनेनैवसिद्धः । एवमनेकविशेषणविशिष्टंपुरुषोत्तमंनमस्ये । नमोवरिवश्चित्रङःक्यजितिसूत्रेणक्यच्प्रत्ययः । कर्तरिकर्म व्यतिहारइतियोग्यकरणरूपेकर्मव्यतिहारेआत्मनेपदं । तेनक्यजंतस्यपरस्मैपदित्वात्कथमात्मनेपदित्वमितिनिरस्तं । तथाचयो ग्यंनमस्कारादिकंकरोमीतियोज्यं । अत्रोपनिषदिपुरुषोत्तमःप्रतिपाद्यइत्येतैर्विशेषणैःसूचितं । आनंदरूपताकथनेनचानंदाविर्भा

वलक्षणं अजरमित्यादिनाऽशेषानिष्टनिवृत्तिलक्षणंचैतदुपनिषत्प्रतिपादितभगवज्ज्ञानफलंचसूचितं । तंयथायथोपासतेतदेवभवती तिश्रुतेः । वक्ष्यतेचं२।६सुकृतोब्रह्मलोकइत्यादिना । अतोयुक्तमेवविषयप्रयोजनवदेतदुपनिषदोव्याख्यानमिति ॥ अधिकारिणांमो क्षार्थंब्रह्मविद्यांवक्तुकामोवेदपुरुषःऋषीनाह॥ ब्रह्मादेवानामित्यादिना॥ यद्यपिऋषिवद्देवतादिकमपिवक्तव्यं। योहवाअविदितार्ष छंदोदैवतब्राह्मणेनमंत्रेणयजतियाजयत्यधीतेध्यापयतिवास्थाणुंवर्च्छतिगर्तेवापद्यतेप्रवामीयतेपापीयान्भवतीत्यनेनार्षपदोदितर्षि संबंध्यज्ञानइवछंदोदेवताद्यज्ञानेप्यध्यापकादेरनर्थोक्तेः । तथाप्यक्षरपरिगणनयाछंदोज्ञानस्य ययातदक्षरमधिगम्यतइत्यादिनादे वताज्ञानस्य अर्थप्रकाशनसामर्थ्यरूपमंत्रलिंगेनब्राह्मणपदोदितविनियोगज्ञानस्यच संभवाद्दषयएवात्रोक्ताइतिज्ञेयं॥ ननुब्रह्मादेवा नांप्रथमःसंबभूवेतिविरिंचःप्रथमपुत्रइत्युक्तं । सकस्यप्रथमःपुत्रः । किंचाथर्वायज्येष्ठपुत्रायेतिअथर्वणोज्येष्ठपुत्रत्वमुक्तं । सकिम पेक्षयाज्येष्ठपुत्रः । किंच अथर्वणोविरिंचज्येष्ठपुत्रत्वमुक्तमयुक्तं । शिवस्यसनकादीनांवाविरिंचज्येष्ठपुत्रत्वप्रतिपादकतत्तदागमविरो धादित्याशंकांप्रमाणेनैवपरिहरति ॥ मनोरिति ॥ अंतरइतिशेषः । अथर्वाब्रह्मणोविरिंचादादौप्रथमंअजनिजातः । अथो अथर्वो त्पत्त्यनंतरमेव । मित्रश्चवरुणश्चप्रहेतिर्हेतिश्चोत्पन्नाः । तेनमित्राद्यपेक्षयाज्येष्ठपुत्रत्वमथर्वणइतिद्वितीयशंकानिरासः । ब्रह्मणइतिपाद त्रयेणतृतीयशंकानिरस्ता । कल्पभेदविवक्षयाशिवादीनांप्राथम्योपपत्तेरिति । प्रथमशंकानिरासायब्रह्माविष्णोरग्रजःसुतइत्युक्तमि

भा०। मनोर्वैवस्वतस्यादावथर्वाब्रह्मणोऽजनि । मित्रश्चवरुणश्चाथोप्रहेतिर्हेतिरेवच । ब्रह्मणःप्रथमेकल्पेशिवःप्रथमजःस्मृतः । सनकाद्यास्तुवाराहेब्रह्माविष्णोस्सुतोग्रजइतिब्रह्मांडे ।

तिविवेचनीयं ॥ ततश्चायंमंत्रार्थः ॥ विश्वस्य सर्वस्य। भुवनस्य जगतः। कर्तागोप्ताच। ब्रह्मा विरिंचः। देवानांमध्ये। प्रथमो विष्णो
र्ज्येष्ठपुत्रःसन्। संबभूव उत्पन्नः। सब्रह्मा सर्वविद्याप्रतिष्ठां प्रतितिष्ठत्यनयेतिप्रतिष्ठा। प्रतिपूर्वात्ष्ठाधातोरातश्चोपसर्गइतिसूत्रेणक
रणेडप्रत्ययः। सर्वविद्यानांप्रतिष्ठासर्वविद्याप्रतिष्ठातां सर्वविद्याप्रतिष्ठापिकां। ब्रह्मविद्याज्ञानेसर्वविद्यानांसफलत्वादितिभावः।
ब्रह्मविद्यां विदंतिअनयेतिविद्या। संज्ञायांसमजनिषदनिपतमनविदेतिविदधातोःकरणेक्यप्प्रत्ययः। ब्रह्मणोविद्याब्रह्मविद्यातां। अ
थर्वायअथर्ववेद(वेत्रे)वक्रे। वैवस्वतमन्वंतरेज्येष्ठपुत्राय। अथर्वणइतिवक्ष्यमाणस्यात्रापिसंबंधः। प्राहेतियोज्यं। अकारांता
थर्वशब्दप्रयोगेणेदंसूचयति। तथाहि। अथर्वणाप्रोक्तोवेदोऽथर्वा। अथर्वन्शब्दात्तेनप्रोक्तमित्यर्थेवसंतादिभ्यष्ठगितिठक्प्रत्यये
तस्य प्रोक्ताल्लुगितिलुकिसतिवेदविशेषोऽथर्वेत्युच्यतइतिमहाभाष्येव्युत्पादितं। अथर्वावक्तव्यत्वेनास्यास्तीत्यथर्वः। अर्शआदि
भ्योजितिसूत्रेणमत्वर्थेऽच्प्रत्ययेनस्तद्धितइतिटिलोपेचसतिवेदविशेषवक्तेतिअकारांताथर्वशब्दाल्लभ्यते। तेनाथर्वणोमुनेस्तत्वज्ञा
नयोग्यत्वंसूचितं। अन्यथाअथर्ववेदव्याख्यातृत्वायोगात्। ज्येष्ठपुत्रायेत्यनेनब्रह्मप्रेमास्पदत्वंसूचितं। ज्येष्ठपुत्रस्यपितृप्रेमास्प
दतायाःसुप्रसिद्धत्वात्। एवंचानेनविशेषणद्वयेनश्रोत्रानुकूल्यंदर्शितं। श्रोतुः वक्तृप्रेमास्पदत्वं तत्वज्ञानयोग्यत्वंचे त्येतद्द्वय
स्यैवश्रोत्रानुकूल्यशब्दार्थत्वात्। प्राहेत्यनेनचश्रोतुःप्रयोजनोद्देशरूपंप्रसंगानुकूल्यंचसूचितं। अन्यथाअथर्वाणंप्रतिब्रह्मणोवेद
व्याख्यानायोगात्। कर्तागोप्तेत्यनेनतुवक्रानुकूल्यंसूचितं। तत्रकर्तेत्यनेनब्रह्मणोविवक्षितार्थतत्वज्ञानं करणपाटवंचसूचितं।

उप०। ब्रह्मादेवानांप्रथमस्संबभूवविश्वस्यकर्ताभुवनस्यगोप्ता। सब्रह्मविद्यांसर्वविद्याप्रतिष्ठामथर्वायज्येष्ठपुत्रायप्राह ॥ १ ॥

तदुभयाभावेब्रह्मणोविश्वकर्तृत्वायोगात्। गोप्तेत्यनेनतुविवक्षाअविप्रलिप्साचसूचिता। तद्द्वयाभावेतत्वज्ञानतज्जन्यपुरुषार्थाभा
वेनपालनायोगात्। विवक्षितार्थतत्वज्ञानादिचतुष्टयमेवचवक्रानुकूल्यं। तदनेनब्रह्मविद्यास्तूयते। यस्मादनुकूलेनवक्रानुकूलं
श्रोतारंप्रतितत्प्रयोजनोद्देशेनोपदिष्टा तस्मादियंब्रह्मविद्याऽतिप्रशस्ताऽवश्यंश्रोतव्याऽध्येतव्याऽध्यापनीयाचेति। एवंसर्वज्ञसंप्र
दायागतत्वाच्चेयंब्रह्मविद्यावश्यंप्रेक्षावदुपादेयेतिसूचयितुंब्रह्मणःपरमात्मज्येष्ठपुत्रत्वमुक्तं। तेनविष्णुनाब्रह्माणंप्रतिब्रह्मविद्योपदि
ष्टेतिसूच्यते। ज्येष्ठायपुत्रायपिताब्रह्मप्रब्रूयात् प्रणाय्यायचां(वां)तेवासिनइतिश्रुतेरित्यलंपल्लवितेन ॥ १ ॥ एवंब्रह्मणाअथर्वणे
ब्रह्मविद्योपदिष्टेत्युक्तं। इदानींमहातिशयद्योतनार्थेविरिंचोपदिष्टाब्रह्मविद्याअथर्वमुनिनास्वशिष्यायोपदिष्टेत्याह ॥ अथर्वणइ
ति॥ स्पष्टार्थोयंमंत्रः। प्रवदेतप्रावदत्। व्यत्ययोबहुलमितिलकारव्यत्ययः॥ अंगिरइति ॥ अंगीःअंगिरौअंगिरइतिरेफांतशब्दस्य
चतुर्थ्यंतरूपमिदं। भरद्वाजस्यापत्यंपुमान्भारद्वाजः। अपत्यार्थेअतइञितिइञ्प्रत्ययंबाधित्वाऋष्यंधकवृष्णिकुरुभ्यश्चेतिऋष्य
ण्। सत्यवहोनामतः ॥ परावरामिति ॥ पराचसावराचपरावरा तामित्यर्थः। ऋगादिविद्यानामेवविवक्षाभेदेनपरावरविद्या
त्वं। नतुपरावरविद्ययोर्भेदोस्तीतिदर्शयितुंपरावरामितिकर्मधारयनिर्देशः। अभेदेकर्मधारयइतिप्रसिद्धेरितिबोध्यं ॥२॥ शुनकस्याप
त्यंपुमान्शौनकः ॥ महाशालइति ॥ सम्यक्प्रत्यब्दंयज्ञकृदित्यर्थः। प्रत्यब्दंयज्ञकृत्सम्यक्महाशालःप्रकीर्तितइतिछांदोग्यभा

उप०। अथर्वणेयांप्रवदेतब्रह्माअथर्वातांपुरोवाचांगिरेब्रह्मविद्यां। सभारद्वाजायसत्यवहायप्राहभारद्वाजोंगिरसेपरावरां ॥ २ ॥ शौनकोहवैमहाशालोंगिरसंविधिवदुपसंपन्नः
पप्रच्छ। कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवतीति ॥ ३ ॥

ष्योक्तेः ॥ विधिवदुपसन्नइति ॥ समित्पाणिरित्यादिविध्युक्तप्रकारेणविनयपूर्वंप्राप्तइत्यर्थः । प्रश्नप्रकारमेवाह ॥ कस्मिन्नुवि
ति ॥ नुवितर्के । हेभगवः । मतुवसोरुःसंबुद्धौछंदसीतिरुत्वेविसर्गः । हेभगवन्पूज्य । इदंकर्मदेवतादिकंसर्वंकेनप्रमाणेनवि
ज्ञातंभवति । विज्ञातंचकर्मादिकंकस्मिन्विज्ञातेसतिविज्ञातफलंभवति । विज्ञातस्याप्यस्यफलंकस्मिन्विज्ञातेसतिभवतीतियाव
त् । एतज्ज्ञानमात्रस्यैवाफलत्वादित्यर्थः । इतिपप्रच्छेत्यन्वयः ॥ ३ ॥ सर्वंकर्मादिकमपरविद्ययाविज्ञातंभवति । विज्ञातंचपरवि
द्याविषयपरमात्मज्ञानेनसफलंभवति । अतोद्वेविद्येवेदितव्येइत्याशयेनप्रश्नद्वयस्याप्युत्तरमाह ॥ तस्मैसहोवाचेति ॥ एवंप्र
श्नद्वयंकृतवतेतस्मैशौनकाय । क्रिययायमभिप्रैतिससंप्रदानमितिसंप्रदानसंज्ञायांचतुर्थी । सअंगिराः । हेतिहर्षे । हृष्टःसन्नुवाचे
त्यर्थः । अपराचेत्यनंतरमितिशब्दोध्याहार्यः । चशब्दौपरस्परसमुच्चयार्थौ । एवशब्दउक्तविभागस्यावधारणार्थः । परैवपरमु
ख्ययावृत्त्याभगवत्प्रतिपादकत्वोपाधिनापरैवसतीविद्याअमुख्यवृत्त्याकर्मादिप्रतिपादकत्वेनापराचभवति । नवस्तुतोव्यक्तिभेदो
स्तीतिसूचयितुंचैवशब्दः । तथाचअवस्थाभेदेनैवविद्याद्वैविध्यं नवस्तुतइतिभावः ॥ ४ ॥ अपरविद्यांदर्शयति ॥ तत्रापरेति ॥
तत्रतयोर्मध्यइत्यर्थः । वर्णानांस्थानप्रयत्नादिनिरूपकंशास्त्रंशिक्षा । कर्मणांसिद्धप्रयोगबोधकोबोधायनाश्वलायनग्रंथःकल्पः ।
तदुक्तंतंत्रवार्तिके । सिद्धरूपप्रयोगोयैःकर्मणामनुगम्यते । तेकल्पालक्षणार्थानिसूत्राणीतिप्रचक्षतइति । शब्दानुशासनपरंशा

उप० । तस्मैसहोवाच । द्वेविद्येवेदितव्येइतिहस्मयद्ब्रह्मविदोवदंति । पराचैवापराच ॥ ४ ॥ तत्रापरा । ऋग्वेदोयजुर्वेदस्सामवेदोऽथर्ववेदश्शिक्षाकल्पोव्याकरणंनिरुक्तंछंदो
ज्यौतिषमिति ॥ ५ ॥

स्त्रंव्याकरणं । शब्दनिर्वचनपरंशास्त्रंनिरुक्तं । गायत्र्युष्णिगादिछंदसांलक्षणनिरूपकंशास्त्रंछंदः । कालनिर्णयकरंशास्त्रंज्यौतिषं ॥ ५ ॥ अथभाष्यार्थः॥ एतदेवऋगादिशास्त्रंअक्षराधिगतिहेतुत्वोपाधिनापरविद्येतिभावेनाह ॥ अथपरेति ॥ अत्रोपनिषदः परविद्याइतिव्याख्यानमसत् । ऋगादिग्रहणेनैवगृहीतत्वात् । ब्राह्मणपरिव्राजकन्यायश्चागतिकागतिः । तज्जन्यंज्ञानंपरविद्ये त्यप्यसत् । अक्षराधिगतिकरणत्वाभावात् । उभयत्रापिप्रमाणविरोधाच्चेतिभावेनोपनिषदंप्रमाणेनैवव्याचष्टे ॥ ऋगाद्याइति ॥ यदाविष्णोर्नवाचकाइति ॥ त्रेतादिकालबलेनविष्णोरन्यत्रादरेण स्वकीययोग्यतावशेनच यदाऋगाद्याःनविष्णोर्वाचकाः किंतुकर्मादिप्रतिपादकाः तदाऋगाद्याःअपरविद्याः । यदातुऋगाद्याःब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायोपकृताःसंतोविष्णोर्वाच कास्तदाताएवपरमाविद्याः । परविद्याइत्यर्थः । विद्याइत्येतदनुसारेणताइतिस्त्रीलिंगं । णेरणौयत्कर्मणौचेत्सकर्तानाध्यानइतिसूत्रे यत्कर्मसकर्तेतिवत् शैत्यंहियत्साप्रकृतिर्जलस्येत्यादिवच्चेतिध्येयं । अत्रानुभवसिद्धत्वादुपनिषदुक्तत्वाच्चवेदादीनांकर्मादिप्रतिपाद कत्वमपरविद्यात्वंचनोपपादनीयं । किंतुविष्णुप्रतिपादकत्वंपरविद्यात्वंच । तत्राद्यंप्रमाणांतरेणोपपादयति ॥ ऋग्भिरिति ॥ हौत्रे णेतितृतीयासप्तम्यर्थे । येहोतारः हौत्रेणहौत्रे । यज्ञेऋग्वेदमंत्रशंसनकर्ताहोता । अध्वर्यूद्गातृहोतारोयजुःसामर्ग्विदःक्रमादितिको शात् । तस्येदंहौत्रं । तस्मिन्हौत्रेकर्मणिऋग्भिःशंसंति । ते विष्णुमेवशंसंति । तथा ये औद्गात्रे उद्गातुःसामवेदविदःइदंऔद्गात्रं ।

---

भा० । ऋगाद्याअपराविद्यायदाविष्णोर्नवाचकाः ॥ ताएवपरमाविद्यायदाविष्णोस्तुवाचकाइतिपरमसंहितायां । ऋग्भिर्हौत्रेणशंसंतितथौद्गात्रेस्तुवंतिये । विष्णुमेवतथातस्मैयजुर्भिरपिजुह्वति । स्तुवंत्याथर्वणैश्चैनंसेतिहासपुराणकैः ।

तस्मिन्कर्मणि । सामभिरितिशेषः । स्तुवंति । तेविष्णुमेवस्तुवंति । अत्रहोतारोऽप्रगीतमंत्रैःस्तुवंति । उद्गातारस्तुप्रगीतमंत्रैरितिविवे कः। तथा ये यजुर्भिर्जुह्वति तेपितस्मैविष्णवएवजुह्वति । क्रिययायमभिप्रैतिससंप्रदानमितिसंप्रदानत्वेतस्माइत्यत्रचतुर्थीतिध्येयं । सेतिहासपुराणकैः आथर्वणैश्चएनंविष्णुंस्तुवंति । भागवताइतिशेषः । ननुसर्वेपिभागवताःऋगादिभिर्विष्णुमेवकुतस्स्तुवंतीत्य तआह ॥ नविष्णोरिति ॥ हिशब्दोहेतौ । यस्मात्तेहोत्रादयोभागवतोत्तमाः अतिशयितभगवद्भक्तियुक्ताः तस्मादतिशयित भक्तिरूपकारणेनतंविष्णुं । वेदादिकरणैरितिशेषः । सर्वोत्तमंजानंतःसंतोविष्णोःसदृशंततःपरमंचनमन्वते । तस्माद्धोत्रादयो विष्णुमेवस्तुवंतीत्यर्थः । ननुतथापिनसर्वेषांऋगादीनांविष्णुवाचकत्वसिद्धिः । उक्तप्रमाणेनहौत्रादिकर्मणिनियुक्तानामेवऋगादी नांभगवद्वाचकत्वलाभादित्यतआह ॥ वेदइति ॥ चतथाशब्दाःपरस्परसमुच्चयार्थाः । एवशब्दस्यविष्णुरेवेत्यन्वयः । सर्वत्रेत्ये तद्वेदादीनांचतुर्णामपिविशेषणं । नन्वनेनप्रमाणेनसर्वेषांवेदादीनांविष्णुपरत्वमेवसिद्धं । नतुब्रह्मपरत्वं । विष्णुब्रह्मणोःशबल शुद्धभेदेनभिन्नत्वादित्याशंकांतुष्यत्वितिन्यायेनपरिहरन्सर्वेषांब्रह्मपरत्वेप्रमाणमाह ॥ एतदंतेचेति ॥ ऋगादिपंचधासंस्थं । ऋ ग्यजुःसामाथर्वेतिहासपुराणाख्यपंचमवेदभेदेनपंचधास्थितंशब्दब्रह्म शब्दजातं । विजानतां विशेषेणउपक्रमादिश्रुतिलिंगादियु क्त्यनुसंधानविशेषेणजानतांवेदार्थज्ञानिनां संबंधमात्रेषष्ठी तान्प्रति । आदावंतेचमध्येचएतद्ब्रह्मैवोक्त्वाप्रशाम्यति पूरिता

भा० । नविष्णोस्सदृशंकिंचित्परमंचापिमन्वते । सर्वोत्तमंतंजानंतस्तेहिभागवतोत्तमाः । वेदेरामायणेचैवपुराणेभारतेतथा । आदावंतेचमध्येचविष्णुस्सर्वत्रगीयते । एतदंते चमध्येचब्रह्मैवोक्त्वाविजानतां । ऋगादिपंचधासंस्थंशब्दब्रह्मप्रशाम्यति ।



कांक्षंभवतीत्यर्थः । ननुसर्ववेदानांविष्णुपरत्वप्रतिपादनायतत्रतत्रस्तुवंतीत्युक्तं । साचाविद्यमानस्तुतिःकिंनस्यादित्याशंकांपरिह र्तुमुक्तार्थेप्रमाणांतरमाह ॥ यंवाकेष्विति ॥ वाकानुवाकौ यजुर्वेदगतप्रकरणविशेषौ । निषदुनिषदा वथर्ववेदगतप्रकरणविशे षौ । सत्येष्वितिवाकादीनांसर्वेषांहेतुगर्भविशेषणं । अबाधितार्थकेष्वित्यर्थः । तथाचभागवताःसत्यकर्माणं अबाधितसर्जनादि कर्मविशिष्टं । सत्यंसाधुगुणपूर्णं । यंविष्णुं । सत्येष्वबाधितार्थकेषुवाकेष्वनुवाकेषु निषत्सूपनिषत्सुसामसुस्तुवंतीतियोज्यं । यमित्य स्यप्रमाणगतेनपूर्वेणोत्तरेणवातच्छब्देनान्वयः । अनेनवेदैर्विद्यमानगुणकर्मस्तुतिरेवक्रियते । अन्यथाबाधितार्थकत्वेनवेदानाम प्रामाण्यप्रसंगात् । नचेष्टापत्तिः । वेदानामबाधितार्थकत्वादित्युच्यते । तेनवेदानांनाविद्यमानस्तुतिपरत्वंशंकनीयमितिभावः । ननुवेदानांकर्मादिवाचकत्वमनुभवसिद्धं । विष्णुवाचकत्वंतुप्रमाणैःसाधितं । अतस्तात्पर्यविषयवाक्यार्थभेदाद्वाक्यभेदप्रसंगइ त्याशंक्यमहावाक्यभेदोनास्त्येव । वेदमहातात्पर्यविषयार्थस्यैकत्वात् । अवांतरवाक्यभेदस्तुदोषएवनभवति । अन्यथातिप्रसं गादित्याशयेनवेदानांविष्णौमहातात्पर्यंकर्मादाववांतरतात्पर्यमित्यर्थप्रतिपादकंप्रमाणांतरंपठति ॥ सर्वेवेदाइति ॥ सर्वेवेदाय त्पदं आ सम्यक् महातात्पर्येणेतियावत् । मनंतिप्रतिपादयंति । म्नाअभ्यासइतिधातोः । यत्प्रति यज्ज्ञानोद्देशेन । सर्वाणि का यिकवाचिकमानसानितपांसिवदंति । ननुवेदाःभगवज्ज्ञानोद्देशेनतपांसिप्रतिपादयंतीत्येतदेवकुतइत्यतउक्तं ॥ यदिच्छंतइति ॥

भा० । यंवाकेष्वनुवाकेषुनिषत्सूपनिषत्सुच । स्तुवंतिसत्यकर्माणंसत्यंसत्येषुसामसु । सर्वेवेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति । यदिच्छंतोब्रह्मचर्यंचरंतितत्तेप दंसंग्रहेणप्रवक्ष्ये ।

यद्भगवत्स्वरूपंज्ञातुमिच्छंतोधिकारिणः ब्रह्मचर्यं उपलक्षणमेतत् त्रिविधंतपश्चरंतिकुर्वंति यत्पदं गम्यं तत् तेसंग्रहेणप्रवक्ष्यइ त्यन्वयः । अत्रयत्पदमित्यस्यान्वयप्रदर्शनार्थमुत्तरार्धोदाहरणं । तेनतद्वैयर्थ्यमितिशंकानिरासः । ननुयदिवेदानांविष्णुवद्देवतां तरेपिमहातात्पर्यंस्यात्तर्हिमहावाक्यभेदोपिस्यादेव । महातात्पर्यविषयार्थभेदादित्याशंकांपरिहर्तुंवेदानांविष्णावेवमहातात्पर्येना न्यत्रेत्यर्थप्रतिपादकंभगवद्गीतावाक्यंपठति ॥ वेदैश्चेति ॥ अहमेववेद्यइत्येवकारेणभगवदन्यस्यवेदवेद्यत्वंनिषिध्यते । नचतद्यु क्तं । अवांतरतात्पर्येणभगवदन्यस्यापिवेदवेद्यत्वांगीकारादतोमहातात्पर्येणाहमेवसर्वैरपिवेदैर्वेद्यः । अन्यस्त्ववांतरतात्पर्येणेति लभ्यते । तथाचमहातात्पर्यविषयस्यैकत्वान्नमहावाक्यभेदइतिभावः । एवंसर्ववेदानांविष्णुवाचकत्वं यदाविष्णोस्तुवाचकाइत्यने नयदुक्तं तत्प्रमाणैरुपपादितं । इदानींताएवपरमाविद्याइत्युक्तमृगादीनांपरविद्यात्वंप्रमाणेनैवोपपादयति ॥ चतुर्दशेति ॥ स्थानशब्दोनिमित्तार्थः । निग्रहस्थानमितियथा । विद्याशब्दोज्ञानवाची । विद्यायाःस्थानानीतितत्पुरुषः । ततोमहच्छब्देन कर्मधारयः । तथाचमहाविद्यास्थानानिपरविद्याइत्येकोर्थः । तथाचऋगादिचतुष्टय मितिहासः पुराणं शिक्षादिषडंगानि मन्वादिस्मृतिः मीमांसाचेति चतुर्दशपरविद्यावेदितव्याइतिश्रुत्यर्थः । ऋग्यजुःसामाथर्वाख्याःपंचरात्रंचभारतं ॥ मूलरामा यणंचैवपुराणंभगवत्परं ॥ वेदाइत्युच्यतेसद्भिःशिक्षाद्याःस्मृतयस्तथा । अंगानिसत्यंमीमांसातद्विद्यायतनंत्रयमितिस्मृतौऋगादी नामेवविद्यास्थानत्वरूपविद्यायतनत्वाभिधानादितिभावः । चतुर्दशेतिमूलश्रुतौचतुर्दशत्वेनोक्तानांपरविद्यानांऋग्यजुरितिस्मृतौ ॥ ६ ॥

भा० । वेदैश्चसर्वैरहमेववेद्योवेदांतकृद्वेदविदेवचाहमितिभारते । चतुर्दशमहाविद्यास्थानानिवेदितव्यानिभवंतीतिचमूलश्रुतिः ।

विवक्षाविशेषवशेनत्रित्वमुक्तमतोनविरोधः । नचपुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः ॥ वेदाःस्थानानिविद्यानांधर्मस्यचचतु र्दशेत्यनेनविरोधइतिवाच्यं । तत्रन्यायशब्देननीयतेनिर्णीयतेवेदार्थोऽनेनेतिव्युत्पत्त्याइतिहासग्रहणात् । एतेन ऋग्यजुःसामाथ र्वाख्याःपंचरात्रंचभारतं ॥ मूलरामायणंचैवपुराणंभगवत्परमितितलवकारभाष्येपंचरात्रादीनांपृथग्ग्रहणात्तद्विरोधइत्यपास्तं । पं चरात्रादीनामपीतिहासपदेनैवग्रहणसंभवात्तेषामपीतिहासत्वात् । तदुक्तं । भारतंपंचरात्रंचमूलरामायणंतथा ॥ इतिहासइतिप्रो क्तमिति । यदाविष्णोस्तुवाचकाइतिकालविशेषेऋगादीनांविष्णुवाचकत्वमुक्तं । यदाशब्दप्रयोगात् । तत्प्रमाणेनैवोपपादयति ॥ **पंचरात्रमिति** ॥ पंचरात्रमृगाद्याश्चेतिसर्वं पुरा कृतयुगे एकं एकविषयमभवदित्यर्थः । तदुपपादयति ॥ **मूलवेदइतीति** ॥ हिशब्दोहेतौ । तदेत्यस्यैवविवरणंकृतयुगइति । कालइतिस्वरूपकथनं । यस्माद्दगादेःसर्वस्यकृतयुगेमूलवेदइति आख्या संज्ञा तस्मात्तत्सर्वंएकविषयमभवदितियोजना । अयमाशयः । मूलंवेदयतीतिमूलवेदः । मूलशब्दोपपदात्ण्यंतात्विदज्ञानइत्यस्मा द्धातोःकर्मण्यणितिसूत्रेणकर्तर्यण्प्रत्ययः । णेरनिटीतिणिलोपः । उपपदमतिङितिसमासः । ततश्चमूलवेदशब्दोमूलकारणज्ञापक माचष्टे । मूलकारणंचविष्णुरेव । मुख्यामुख्ययोर्मुख्येसंप्रत्ययइतिन्यायात् । अतोमूलवेदइतिसंज्ञाबलाद्दगादिकंसर्वमेकविषय मितिकल्प्यते । नचमूलवेदशब्दोरूढएवास्त्विवतिवाच्यं । योगसंभवेरूढिकल्पनस्यप्रोक्षण्यधिकरणन्यायविरुद्धत्वात् । तदुक्तं । भवेतांयदिवृक्षस्यवाजिकर्णौकथंचन । अदृष्टांसमुदायस्यकःशक्तिंजातुकल्पयेदिति । ननुऋगादिसंज्ञांतरसद्भावात्कथंमूलवेदइति

भा० । पंचरात्रमृगाद्याश्चसर्वमेकंपुराभवत् । मूलवेदइतिह्याख्याकालेकृतयुगेतदा ।

ह्याख्येत्युक्तमित्यतआह॥ नैवर्क्सामेति॥ विभक्तानामेववेदानामृगादिसंज्ञा। कृतयुगेचनवेदविभागः। तस्माद्दगादिसंज्ञानास्ति किंतुमूलवेदइत्येवसंज्ञेतिभावः। नन्वेवंपंचरात्रमृगाद्यांश्चेतिकृतयुगेकथमृगादिव्यवहारइतिवाच्यं। सूत्रशाटकन्यायेनभाविभावेन व्यवहारोपपत्तेरिति। युक्त्यंतरेणापिसर्वमेकविषयकमित्येतमर्थमुपपादयितुमाह॥ नैवचेति॥ किंचेतिचार्थः। इंद्रादिशब्दप्रवृत्तिनिमित्तानांपरमैश्वर्यादीनांविष्णोरन्यत्रनिरवधिकानामनन्यायत्तानांचाभावादितिभावः। तर्हींद्रादिशब्दानांनिरर्थकत्वेनपदत्वंन स्यादित्यतआह॥ ब्रह्मरुद्रेति॥ नामानिसर्वाणियमाविशंति। इंद्रंमित्रंवरुणमग्निमाहुरित्यादिश्रुतेरितिभावः। नैवचेत्यादिवाक्यद्व यस्यायंभावः। इंद्रादिशब्दवाच्यत्वमन्येषांनास्ति किंतुविष्णोरेव। अतःइंद्रादिसूक्तात्मकोवैश्वानरादिविद्यात्मकश्चसर्वोपिवेदोविष्णवेकविषयः। अन्यथाअप्रामाण्यप्रसंगादिति। सर्वमेकविषयकमित्यर्थहेत्वंतरेणाप्युपपादयितुमाह॥ देवतात्वेनेति॥ कार्तयुगैर्जनैस्तावद्विष्णुर्देवतात्वेनेज्यः। यागोनाममंत्रपूर्वदेवतामुद्दिश्यद्रव्यत्यागः। तथाचमंत्रोच्चारणपूर्वकंविष्णूद्देशकयागेकृतेमंत्राणां विष्णुविषयकत्वंसिद्ध्यति। अन्यविषयकमंत्रेणान्ययजनासंभवादितिभावः। ननुविष्णुरेवयदिदेवतात्वेनेज्यःतर्हिब्रह्मादियजनाभावप्रसंगइत्याशंक्यकिंसर्वथायजनाभावआपाद्यतेकिंवादेवतात्वेनेतिविकल्प्याद्यंनिराकरोति॥ ब्रह्माद्याइति॥ब्रह्माद्यामनुनामकाः सर्वादेवताः वक्तृत्वेन भगवत्स्वरूपोपदेष्टृत्वेन गुरुत्वेन पितृत्वेन कारित्वेन करोतीतिकारी। नंदिग्रह्यादिसूत्रेणग्रह्यादित्वाणि

भा०। नैवर्क्सामादिनामानितदावेदस्यचाभवन्। नैवचेंद्रादिनामानिविष्णोरन्यत्रकुत्रचित्। ब्रह्मरुद्रेंद्रपूर्वैस्तुनामभिःप्रोच्यतेहरिः। देवतात्वेनपूज्यस्सः ब्रह्माद्यामनुनामकाः। वक्तृत्वेनपितृत्वेनकारित्वेनैवचादरात्। इज्यंतेदेवतास्सर्वानतुदेवतयाक्वचित्।



निः। तस्यभावःकारित्वं। तेनभगवत्पूजाकारित्वेनच। आदरात्। ल्यब्लोपनिमित्तापंचमी। आदरंविधायइज्यंतएव। तथाहि यथाइतरयुगेषुगुर्वादयःनदेवतात्वेनेज्यंतेकिंतुगुरुत्वेनैव। तथाकृतयुगेपिब्रह्मादयोगुरुत्वेनेज्यंते। अतःसर्वथायजनाभावापादनं नयुक्तमितिभावः। अत्रब्रह्माद्याइत्येवोक्तेअपभ्रष्टदेवानामपिप्रतीतिःस्यात्। तेषामपिब्रह्मादिनामकत्वात्देवत्वाच्च। तथाचइ ज्यंतइत्युक्तमयुक्तंस्यात्। अपभ्रष्टाअदेवाश्चब्रह्माद्याख्यायुताअपि। देवसंज्ञाश्चदीनत्वात्पूजयेयुर्नतान्क्वचिदिति तत्पूजानिषेधादित्यतउक्तंमनुनामकाइति। मनवोबोधवैशिष्ट्याद्देवाब्रह्मादयःस्मृताइतिस्मृत्याब्रह्मादीनांमनुनामकत्वंबोध्यं। मनुनामकाइत्येवोक्ते स्वायंभुवादिमनूनांप्रतीतिःस्यात्। तथाचब्रह्मादीनामिज्यत्वासिद्धिरित्यतउक्तंब्रह्माद्याइति। देवताइतितुब्रह्मादीनांकेनचिद्रूपेणपूज्यत्वसमर्थनाय। तथाहि। ब्रह्मादयस्तावद्देवत्वात्पूज्याः। देवान्भावयतानेनेत्याद्युक्तेः। नचतेदेवत्वेनरूपेणपूज्याः। उत्तरत्रनिषेधात् किंतुवक्तृत्वादिनाप्रकारांतरेणेतिबोध्यं। देवतात्वेनयजनाभावआपाद्यइतिद्वितीयपक्षमिष्टापत्त्यादूषयति॥ नतुदेवतयेति॥ विप्रक्षत्रियविट्शूद्रवर्णभेदेनसर्वशः। मनवोमानवाश्चैवसंपूज्यानैवदेवताइतिस्मृतौ ब्रह्मादिदेवताः नैवसंपूज्याइतितावदुक्तं। नचसर्वथातत्रपूजाभावोभिप्रेतः। इज्यंतेदेवताःसर्वाइत्यादिविरोधात्। अतःसविशेषणेहीतिन्यायेनदेवतात्वेननैवसंपूज्याइत्यर्थस्यवक्तव्यत्वादितिभावः। ननुकार्तयुगैर्जनैर्विष्णुरेवदेवतात्वेनेज्यइत्युक्तमयुक्तं। बीजाभावात्प्रयोजनाभावाच्चेत्यतआह॥ अनन्य याजिनइति॥ तुशब्दोयस्मादित्यर्थे। येविष्णुंयजंतितेकार्तयुगाजनाः। यस्मादनन्ययाजिनः अन्ययजनंविनाविष्णुयजनस्व

भा०। अनन्ययाजिनस्तेतु

भावाः तस्मात्त्वंहरिमेवप्राप्नुवंति। मद्भक्तायांतिमामपीतिगीतोक्तेरितिभावः। अत्रअनन्ययाजिनइत्यनेनयोग्यताख्यंनिमित्तमुक्तं। णिनिप्रत्ययस्यसुप्यजातौणिनिस्ताच्छील्यइतिसूत्रेणस्वभावार्थत्वावगमात्। स्वभावोयोग्यतेत्यनर्थांतरं ।तदुक्तं। स्वभावाख्या योग्यतायाहठाख्येति। प्राप्नुवंतीतिफलमुक्तं। तथाचबीजप्रयोजनसद्भावात् देवतात्वेनचेज्यःसइत्युक्तमुपपन्नमितिभावः। अस्तुसर्वमेकविषयकं। ततःकिमित्यतआह ॥ **तस्मादिति** ॥ कृतयुगेसर्वस्यापिवेदस्यविष्णवेकविषयकत्वात्किंचन व्यपदेशभेदप्रयुक्तंवा प्रतिपाद्यभेदप्रयुक्तंवा पूज्यभेदप्रयुक्तंवा पारावर्यं परापरविद्याभेदः वेदेनास्तीत्यर्थः। तथापिवक्तृभेदाद्वेदेपारावर्यंभविष्यतीत्यतआह ॥ **हरेरिति** ॥ यस्मादृगाद्याःअनुव्याख्यांताः निश्वसितमेतदृग्वेदोयजुर्वेदःसामवेदोऽथर्वांगिरसइतिहासःपुराणःश्लोकाःसूत्राण्यनुव्याख्यानानीतिश्रुत्युक्तग्रंथाःतुरगाननात्हरेरुत्थितास्तस्माद्वेदेपारावर्यंनास्तीत्यन्वयः। अस्त्वेवंवेदेपारावर्याभावस्ततःकिमित्यतआह ॥ **तस्मादिति** ॥ यस्मात्वेदेपारावर्यंनतस्मात्कार्तयुगोजनःसर्वैर्वेदैर्हरिंयजेत्पूजयेत्जानीयाच्चेत्यर्थः। तथाआचारोप्यस्तीत्याह ॥ **तस्मादिति** ॥ अत्रापभ्रष्टव्यावृत्त्यैमनवइति ॥ स्वायंभुवादिमात्रप्रतीतिव्यावृत्त्यैब्रह्मादयइति। एवंमरीच्यादिनामकापभ्रष्टव्यावृत्त्यैमानवाइत्युक्तं। मनुपुत्रमात्रप्रतीतिव्यावृत्त्यैमरीच्याद्याइत्यध्याहार्यं। मरीच्यादीनां मानवनामकत्वंतु मरीच्याद्यास्तुतत्पुत्रामानवानामतःस्मृताइतिस्मृतिसिद्धं। ननुयदिकृतयुगेसर्ववेदैर्हरिःपूज्योज्ञेयश्च तर्हिहरि



भा०। तस्मात्कार्तयुगाजनाः। प्राप्नुवंतिहरिंतंचतस्माद्वेदेनकिंचन । पारावर्यं हरेर्यस्मादुत्थितास्तुरगाननात्। ऋगाद्याअनुव्याख्यांतास्तस्मात्सर्वैर्हरिंयजेत्। तस्माद्ब्रह्मादयस्सर्वेमनवोमानवास्तथा। यजंतिसर्ववेदैस्तंजानंतिचविनिश्चयात्।

यजनादावशक्तस्यतूष्णींभावःप्राप्तइत्यतआह ॥ अशक्तइति ॥ सर्ववेदैर्हरियजनादावशक्तइत्यर्थः । कार्तयुगोजनस्त्रिविधः । उत्तममध्यमाधमभेदात् । तत्रोत्तमःसर्वैर्यजेत् । मध्यमोऋगाद्यैस्तंयजेत् । अधमस्तुपंचरात्रेणेत्येवंव्यवस्थितविकल्पसूचनार्थमथवेत्युक्तं । एवंकृतयुगेहरियजनप्रकारमुक्त्वात्रेतादौतमाह ॥ ऋगाद्यैरेवेति ॥ ऋगाद्यैस्त्रिभिरेवेत्यर्थः ॥ त्रैतैरिति ॥ त्रेतायांभवास्त्रैताःतैरित्यर्थः । कार्तयुगजनापेक्षयावैलक्षण्यसूचनायभिन्नैरितिजनविशेषणं । योग्यताभेदवद्भिरित्यर्थः । इदंचऋगाद्यैरित्यस्यापिविशेषणं । तत्रविभक्तैरित्यर्थः । तथाचभिन्नैर्योग्यताभेदवद्भिस्त्रैतैर्जनैः सहरिः भिन्नैःविभक्तैः ऋगाद्यैस्त्रिभिरेवेष्टः पूजितोज्ञातश्चभवतीतियोज्यं । एवंद्वापरीयैरित्यादिभाष्यमपियोज्यं । ननुयुगचतुष्टयेचतुर्विधंयजनादिकमुक्तं । तत्रकिंनिमित्तमितिचेत् । योग्यतावैचित्र्यमितिब्रूमः । एतच्चभिन्नैरित्यादिनासूचितं । निमित्तांतरमप्याह ॥ एकइति ॥ कृतयुगेहरियजनाद्यंगवेदस्याविभक्तत्वं त्रेतायांत्रेधाविभक्तत्वं द्वापरेपंचधाविभक्तत्वं कलौप्रायेणोत्सन्नत्वं चेतिनिमित्तचतुष्टयेनकृतयुगादौहरियजनादिचातुर्विध्यमितिभावः । ननुयदित्रेतादियुगेऋगाद्यैरेवेत्यादिनियमस्तर्हिसर्ववेदैर्हरियजनादौशक्तानांब्रह्मादीनांत्रेतादौतदभावःस्यात् । अन्यथोक्तनियमभंगप्रसंगइत्यतआह ॥ मुख्यइति ॥ कृतयुगेउत्तम

---

भा० । अशक्तःपंचरात्रेणऋगाद्यैर्वाथतंयजेत् । ऋगाद्यैरेवसत्रैतैर्भिन्नैरिष्टोजनैर्हरिः । द्वापरीयैर्जनैर्विष्णुःपंचरात्रैस्तुकेवलैः । कलौतुनाममात्रेणपूज्यतेभगवान्हरिः । एकोवेदःकृतेह्यासीत्त्रेमायांसत्रिधाभवत् । सएवपंचधाजातोद्वापरंप्राप्यवैयुगं । उत्सन्नस्सकालिंप्राप्यवेदःप्रायेणसर्वशः । मुख्योधर्मःकार्तयुगोवार्तितव्यःकलावपि । त्रेतादौतदशक्त्याहिधर्मोन्यःसंप्रकीर्तितः ।

मध्यमाधमभेदेनहरियजनादित्रैविध्यस्योक्तत्वात्तत्रोत्तमाधिकारिकर्तव्यधर्मसंग्रहार्थंमुख्यइत्युक्तं ॥ **वर्तितव्यइति** ॥ अंतर्णी
तण्यर्थोयं । प्रवर्तयितव्यइत्यर्थः। कलावपीत्यपिशब्देनत्रेताद्वापरयोःसमुच्चयः । एवंतर्हिंऋगाद्यैरेवसत्रैतैरित्यादिनियमभंगइत्य
तआह ॥ **त्रेतादाविति** ॥ तथाचोक्तनियमस्याशक्तविषयत्वान्नोक्तनियमभंगइतिभावः॥ **तदशक्त्येति**॥ मुख्यकार्तयुगधर्मा
नुष्ठानाशक्त्येत्यर्थः ॥ **अन्यइति** ॥ ऋगाद्यैरेवेत्यादिनोक्तइत्यर्थः। कृतयुगेऋगादिकंसर्वंविष्णुप्रतिपादकमित्युक्तं। तत्रनिमित्त
माह ॥ **कृतइति** ॥ चशब्दोयस्मादित्यर्थे । तथाशब्दस्तस्मादित्यर्थे । यस्मात्कृतेसर्वेपिपुरुषाःभागवताःभगवद्भक्ताः त
स्मात्कृतेसर्वेपिवेदाः भगवताःभगवत्प्रतिपादकाः । तथाचकार्तयुगानांसर्वेषांभगवद्भक्तिरूपनिमित्तसद्भावात्कृतेसर्ववेदेभ्योपि
भगवत्प्रतीतिर्भवितुमर्हति । योहियत्रादरवानूतस्यैवतद्वस्तुविद्यमानमपिस्फुरतीतिन्यायादितिभावः । एवंकृतयुगेसर्ववेदानां
विष्णुप्रतिपादकत्वेनिमित्तमुक्त्वा त्रेतादौतदभावेनिमित्तमाह ॥ **त्रेतायामिति** ॥ पुरुषपक्षेविषयशब्देनादरविषयोग्राह्यः।
वेदपक्षेतुतत्प्रतिपाद्योविषयः ॥ **त्रैविद्यतामिति** ॥ त्रिविधाविद्यात्रिविद्या । तामधीयतेविदंतिवात्रैविद्याः । तदधीतेतद्वेदे
तिसूत्रेणाण्प्रत्ययः । उक्थादित्वात् ठक्प्रत्ययस्तुनभवति । विद्याचानंगक्षत्रधर्मत्रिपूर्वेतितन्निषेधात् । वेदाध्ययनतदर्थज्ञानवंतः
तेषांभावस्त्रैविद्यतातामित्यर्थः । तदयमर्थः । यस्मात्रेतायांपुरुषाभिन्नविषयाःभिन्नभिन्नार्थविषयकादरवंतः तस्मात्रैविद्यतामु
क्तरूपां गताः । अतःसर्वेवेदाःभिन्नविषयाः भिन्नभिन्नार्थप्रतिपादकाइति । तदनेनत्रेतायांसर्ववेदानांभिन्नभिन्नार्थप्रतिपादकत्वे ॥ ९ ॥

भा० । कृतेभागवतास्सर्वेवेदाश्चपुरुषास्तथा । त्रेतायांभिन्नविषयास्ततस्त्रैवियतांगताः ।

पुरुषनिष्ठान्यादरोनिमित्तमित्युक्तंभवति। नन्वेवंसतित्रेतायुगस्थानामेवजनानांत्रैविद्यतांगताइतिविशिष्योक्तिरयुक्ता। त्रिविधवेदा
ध्ययनतदर्थज्ञानवत्त्वरूपत्रैविद्यशब्दप्रवृत्तिनिमित्तस्य कृतयुगस्थभागवतेष्वपिसद्भावादितिचेत् उच्यते । त्रेतायुगस्थाजनास्त्रि
विधाः । मुक्तियोग्यनित्यसंसारितमोयोग्यभेदात् । तत्रमुक्तियोग्याःविष्णोस्सर्वप्रकारेणाधिक्यरूपवेदार्थज्ञानवंतः । नित्यसंसा
रिविशेषाःराजसराजसास्तुविष्णोःकिंचिदुत्तमत्वरूपवेदार्थज्ञानवंतः । द्वेषिणस्तुब्रह्मादिसाम्यतद्धीनत्वरूपवेदार्थज्ञातवंतः ।
तेषामापाततो जनितोतविष्णोरित्यादिवेदेभ्यस्तस्यैवार्थस्यप्रतीतेः । तदेवमुक्तप्रकारेणत्रेतायुगस्थजनानांभिन्नभिन्नवेदार्थज्ञान
वत्त्वात्त्रैविद्यतांगताइतिविशिष्योक्तिर्घटते । नचैवंकार्तयुगाजनाइति तत्रतदनुक्तिः । एवंत्रेतायांवेदानांभिन्नभिन्नार्थप्रतिपादक
त्वाद्वेदास्त्रिविधतांगताइत्यपिबोध्यं । एवमुपपादितमर्थमुपसंहरति ॥ **तस्मादिति** ॥ यस्मान्मुख्यःकार्तयुगोधर्मःसर्वदाक
र्तव्यः यस्माच्चसर्वेवेदाःभगवद्विषया स्तस्मात्सर्वैःपुरुषैःसर्वदाएकःसनातनोविष्णुरेवसर्ववेदैर्वंद्यःस्तुत्यः। वदिअभिवादनस्तुत्योरि
त्युक्तेः । स्तुतिपूर्वकंसोपचारैरर्घ्यपाद्यादिषोडशोपचारसहितैर्यज्ञैःपूज्यः। ततोऽदृष्टद्वाराअंतःकरणशुद्धौसत्यांज्ञेयः । श्रोतव्योमं
तव्योध्येयश्चेत्यर्थः। प्रागृगाद्यैरेवसत्रैतैर्भिन्नैरिष्टोजनैर्हरिरित्यादिनापुरुषशक्त्यल्पत्वापेक्षयात्रेतादौसर्वप्रकारेणविष्णुसर्वोत्तमत्वप्र
तिपादकत्वाभावउक्तः। त्रेतायांभिन्नविषयाइत्यनेनतुभिन्नविषयकादरान्निमित्ताद्भिन्नभिन्नप्रतिपादकत्वमित्युक्तं । इदानींकालब
लादपितथेत्याह ॥ **वेदवादाइति** ॥ वेदानांवादाःमुखतोवचनानि । वादोविषयकत्वंचमुखतोवचनंस्मृतमित्युक्तेः । आपात

भा० । तस्मादेकस्सर्ववेदैर्ज्ञेयोविष्णुस्सनातनः । पूज्योयज्ञैस्सोपचारैर्ध्येयोवंद्यश्चसर्वदेत्यादिनारायणसंहितायां । वेदवादाश्चानुयुगंह्रसंतीतिचनःश्रुतिरितिभारते ।

तोविष्णुप्रतिपादनशक्तयइत्यर्थः ॥ अनुयुगंह्रसतीति ॥ कृतयुगेतत्सामर्थ्यात्सर्ववेदानांविष्णुप्रतिपादनशक्तिराविर्भूता । त्रेतायांतुतत्कालबलाद्विष्णुप्रतिपादनशक्तिर्ह्रसिताभवति । द्वापरादौतुततोप्याधिक्येनह्रसिताभवतीत्येवं वेदवादाः अनुयुगं युगशब्देनकृतादिचतुर्युगंग्राह्यं । युगस्यानुपूर्व्येणानुयुगं । अव्ययंविभक्तीत्यादिसूत्रेणानुपूर्व्येऽव्ययीभावः । युगक्रमेणेत्यर्थः । वेदवादाःयुगक्रमेणह्रसंतीतिनःश्रुतिः । अस्मत्कर्तृकंश्रवणमस्तीत्यर्थः । श्रुतमितिपाठेतुभावेक्तप्रत्ययइतिबोध्यं । ननूक्तप्रमाणैः सर्ववेदानांविष्णुपरत्वमुपपाद्यपरविद्यात्वंसमर्थितं । तदयुक्तं । सर्ववेदवद्ग्रंथांतरस्यापिविष्णुप्रतिपादकत्वेकिंऋगाद्याःपरविद्याः किंवाग्रंथांतरमितिसंदेहापातात् । ययातदक्षरमधिगम्यतइत्युक्ताक्षराधिगतिकरणत्वस्योभयत्रसाम्यादित्यतआह ॥ वेदैश्चेति ॥ तथाचान्यस्यविष्णुप्रत्यायकत्वाभावाद्वेदादीनामेवविष्णुप्रत्यायकत्वेनपरविद्यात्वनिर्णयोपपत्तिरितिभावः । वेदैश्चपंचरात्रैश्चेति करणेतृतीया । चशब्दौपरस्परसमुच्चयार्थौ । पंचरात्रैरितिसंहिताभेदाद्बहुवचनं । भक्त्यायज्ञैरितिहेतौतृतीया । तथाशब्दउपमायां । यथावेदादिभिर्दृश्यस्तथाभक्त्यादिभिरिति । एवशब्दोवेदैरेवेत्यवधारणार्थः । चशब्दइतरेतरयोगे । भक्त्यादिमिलितानामेववेदादीनांज्ञानकरणत्वात् । वेदैरेवेत्यवधारणव्यावर्त्यमाह ॥ नान्यथादृश्यइति ॥ वेदादिव्यतिरिक्तग्रंथेनभक्त्याद्यन्यसाधनेनचज्ञेयोनेत्यर्थः । स्यादेतत् । यदिपरापरविद्याविभागकर्तुरंगिरसोमुनेःऋगादीनामेवावस्थाभेदेनपरविद्या

भा० । वेदैश्चपंचरात्रैश्चभक्त्यायज्ञैस्तथैवच । दृश्योहंनान्यथादृश्योवर्षकोटिशतैरपीत्यादिवाराहे ।

त्वमपरविद्यात्वंचेत्यत्रतात्पर्यंस्यात् । तदेवकुतइत्याशंकांपरिहरन्नेवापव्याख्यानद्वयेदोषांतरंसूचयति ॥ अत्रापीति ॥ यदि ऋगाद्याएवपरविद्याअपरविद्याश्चेत्यत्रभगवतोमुनेस्तात्पर्यंनस्यात्तर्ह्युत्तरत्रकर्मविषयाणांब्रह्मविषयणांचमंत्राणामुपन्यासोनुपपन्नः स्यात् । द्वेविद्येवेदितव्येइतियेद्वेविद्येप्रतिज्ञातेतयोरेवाग्रेवक्तव्यत्वात् । नचैवं । अतःकर्मब्रह्मविषयाणांमंत्राणामेवपरापरविद्या त्वसिद्धिः । अनेनोपनिषदादेःपरविद्यात्वंनिरस्तं । उत्तरग्रंथपर्यालोचनयामंत्राणामेवपरविद्यात्वात् । तेषांचोपनिषदादिभिर्भि न्नत्वादितिभावः ॥ कर्मविषयामिति ॥ अत्रमंत्रात्मिकामेवेतिग्राह्यं । आथर्वणानेवेत्येवशब्दस्यमंत्रानेवेत्यन्वयः । तेनमं त्राणामेवकर्मविद्यात्वंब्रह्मविद्यात्वंच । अतोमंत्रेष्वेवपरापरविभागोनत्वन्यथेतिसूचितं । इतोपिऋगादयएवपरविद्याः नोपनि षदादिकमित्याह ॥ चतुर्वेदेति ॥ चतुर्वेदाध्ययनव्याख्यानाद्यंगसंस्कारवतामित्यर्थः । स्वस्ववेदाध्ययनाद्यंगसंस्कारवतामि तितुपरमार्थः । विद्यायामित्यस्यसर्ववेदगतब्रह्मविद्यायामित्यर्थः । अतःऋगादीनांब्रह्मविद्यानांचैकाधिकारिकत्वात्तेषामेवपर विद्यात्वमितिशेषः । अयंभावः । अंगिरसातावदुपसंहारेऋगादीनांब्रह्मविद्यायाश्चैकाधिकारिकत्वमुक्तं । तच्चऋगादीनामेवब्रह्म विद्यात्वरूपपरविद्यात्वेसंभवति । नान्यथा । विषयभेदेअधिकार्यैक्यायोगात् । अतस्तदन्यथानुपपत्त्याऋगादीनांपरविद्या त्वेतात्पर्यमवगम्यतइति । किंतदधिकारैक्यप्रतिपादकवाक्यमित्यतआह ॥ तेषामिति ॥ ननुशिरोव्रतमित्यथर्ववेदसंस्कार

---

भा० । अत्रापितदेतत्सत्यंमंत्रेषुकर्माणिकवयोयान्यपश्यन्नित्यादिनाकर्मविषयामपरविद्यामुक्त्वा येनाक्षरंपुरुषंवेदसत्यंप्रोवाचतांतत्वतोब्रह्मविद्यामित्यारभ्याथर्वणानेवमंत्रान्पर विद्यात्वेनाह । चतुर्वेदसंस्कारवतामेवचविद्यायामधिकारउक्तः । तेषामेवैतांब्रह्मविद्यांवदेतशिरोव्रतंविधिवद्यैस्तुचीर्णमिति ।

उक्तः । तेनाथर्ववेदसंस्कारवतामथर्ववेदरूपब्रह्मविद्यायामधिकारःसिद्ध्यति । नतुस्वस्ववेदाध्ययनाद्यंगसंस्कारवतांसर्ववेदगतब्रह्मविद्यास्वधिकारइत्यतआह ॥ **शिरोव्रतमित्युपलक्षणत्वेनेति** ॥ उपलक्षकत्वसमर्थनायस्वस्ववेदाध्ययनाद्यंगसंस्कारस्यैवसर्वविद्याधिकारत्वेप्रमाणमाह ॥ **स्ववेदेति** ॥ **इतिश्रीमदथर्वणोपनिषद्भाष्यटिप्पण्यांउमर्जीकृष्णाचार्यविरचितायांप्रथमःखंडः ॥ १ ॥** ततश्चायमथपरेत्युपनिषद्वाक्यार्थः । यदाययाऋगादिरूपयाविद्ययातत्प्रसिद्धंअक्षरंविष्णुरधिगम्यतेअथतदासैवपरविद्येति । यदिदंअथपराययातदक्षरमधिगम्यतइतिऋगादिवेदानामेवविष्णुबोधकत्वमुक्तंतत्समर्थयन्नेवाक्षरमहिमानमाह ॥ **यत्तदिति** ॥ अत्रमंत्रेयच्छब्दद्वयंयस्मादित्यर्थे । आद्यस्तच्छब्दःप्रकृताक्षरपरामर्शकः । तस्मादित्यर्थकश्च । द्वितीयस्तच्छब्दःप्रसिद्धार्थकः । तृतीयस्त्वक्षरपरामर्शकः । तथाचेयंयोजना । यत्यस्मात् तत्अक्षरं अद्रेश्यमदृश्यं प्रत्यक्षावेद्यं । अग्राह्यंअनुमानपौरुषेयागमावेद्यं । अगोत्रं यमधिकृत्यप्रवराध्यायेप्रवराउच्यंतेतद्गोत्रमित्युच्यते । तद्रहितं । अवर्णंब्राह्मणादिवर्णरहितं । प्राकृतभौतिकशुक्लादिवर्णरहितमितिवा । अचक्षुःश्रोत्रंजडज्ञानेंद्रियरहितं । अपाणिपादंजडकर्मेंद्रियरहितमिति तत्प्रसिद्धं । यद्यस्माच्चधीराःधैर्यवंतः । तत्अक्षरं नित्यंआद्यंतशून्यं विभुंसर्वैश्वरं सर्वगतंव्याप्तं सुसूक्ष्मंअत्यंताणुरूपं अव्ययं

भा० । शिरोव्रतमित्युपलक्षणत्वेन । स्ववेदव्रतयुक्तस्यसर्ववेदगतास्वपि । अधिकारोस्तिविद्यासुनावेदव्रतिनःक्वचिदितिव्याससमृतौ । एतद्ब्रह्मचतुर्मुखः ॥ आथर्वणोपनिषद्भाष्येप्रथमःखंडः ॥ १ ॥

उप० । अथपरा ययातदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मं तदव्ययंयद्भूतयोनिंपरिपश्यंतिधीराः ॥ ६ ॥



व्येतिविविधंविकारंप्राप्नोतीतिव्ययं । तस्मादन्यदव्ययं । जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यतीति वार्ष्यायणिवाक्योक्तषड्भावविकाररहितं । उपादानधर्मिणोधर्म्यंतरात्मनापरिवर्तोजनिः । देहाद्यधिष्ठानेनावस्थानमस्तित्वं । अवयवोपचयोवृद्धिः । धर्मलक्षणावस्थानामन्यथात्वंविपरिणामः । अवयवापचयोपक्षयः । स्वोपादानमात्रत्वापत्तिर्विनाशः । एतेचविकाराःभावस्यैवेतिषड्भावविकाराइतिप्रसिद्धिरितिबोध्यं । नचनित्यमित्यनेनांशेनपुनरुक्तिः । तत्रस्वरूपलाभतन्नाशयोर्निषेधात् । अत्रतुभावविकाररूपोत्पत्तिविनाशौनिषिध्येतेइतिनोक्तदोषः । भूतयोनिंसर्वभूतोत्पत्तिस्थितिलयकारणं । परिपश्यंतिजानंति । तस्मात्तदक्षरंऋगादिपरविद्ययैवाधिगम्यतइतियुक्तमित्यर्थः । अत्रसामान्यसिद्धिपरिशेषाभ्यामक्षरस्यागमैकवेद्यत्वंसमर्थितं । तथाहि । धीरास्तावदक्षरंनित्यत्वादिनाजानंति तत्रज्ञानंनप्रत्यक्षजन्यं । अक्षरस्यातींद्रियत्वात् । तदाह अदृश्यमिति । नाप्यनुमानेनवापौरुषेयागमेनवाजन्यं । अक्षरस्याग्राह्यत्वात् । तदप्याह अग्राह्यमिति ॥ किंतुऋगादिपरविद्याजन्यं । तदयं प्रयोगः । अक्षरज्ञानंपरविद्याजन्यं । तदन्याजन्यत्वेसतिजन्यत्वादितिबोध्यं । अत्रविभुमितिपुल्लिंगसमर्थनायनित्यमित्यादिपदानिद्वितीयांतत्वेनयोजितानीतिज्ञेयं ॥ ६ ॥ भूतयोनिमित्युक्तंसर्वोत्पत्तिकारणत्वंदृष्टांतपूर्वकमाह ॥ **यथेति** ॥ यथोर्णनाभ्युपभुक्तान्नपरिणततच्छरीरधातवस्तंत्वाकारेणपरिणताभवंति । तत्रोर्णनाभिःकर्ताभवति । तथामहाप्रलयेपरमेश्वरेणनिगीर्णमहदादिकार्यंतच्छरीररूपकप्रधानतांगच्छति । तत्रप्रधानंपुनर्महदाद्याकारेणपरिणमते तत्रेश्वरःकर्ताभवतीत्याशयेनो

उप० । यथोर्णनाभिस्सृजतेगृह्णतेचयथापृथिव्यामोषधयस्संभवंति । यथासतःपुरुषात्केशलोमानितथाक्षरात्संभवतीहविश्वं ॥ ७ ॥

र्णनाभिदृष्टांतोपादानं । उत्पद्यमानंचकार्यंतदाश्रिततयैवोत्पद्यते । नतुघटादिवदन्याश्रिततयेत्यभिप्रेत्य ( यथापृथिव्यामिति ) द्वितीयदृष्टांतउक्तः । नकेवलमीश्वरःकुलालादिवत्कर्ता । अपितुयथाजीवोदेहाधिष्ठातृत्वेनकेशादिकर्तातथेश्वरोधिष्ठातृत्वेनापिकर्तेतिभावेनोक्तं ॥ **यथासतइति** ॥ यद्वाकुलालवत्क्लेशेनस्रष्टृत्वंनास्तीतिभावेनोक्तं ॥ **यथासतइति** ॥ ततश्चायमक्षरार्थः । यथोर्णनाभिःकीटविशेषः ऊर्णरूपंस्वकार्यंसृजते । आत्मनेपदंछांदसं । उत्पादयति । गृह्णते । अत्रबहुवचनंछांदसं । गृह्णातिविनाशयतीतियावत् । तथाक्षरमपिविश्वंसृजतिगृह्णातिच । यथौषधयःपृथिव्यांतदाश्रयेणसंभवंति तथाविश्वमपिइहाक्षरेसंभवति । उत्पन्नंसत्तदाश्रितमेवतिष्ठतीतियावत् । यथासतोजीवतः मृतव्यावृत्त्यर्थमिदं । पुरुषात्केशलोमानि शिरोरुहाःकेशाः । कचःकेशःशिरोरुहइतिकोशात् । तनूरुहाणिलोमानि । तनूरुहंरोमलोमेतिकोशात् । भवंति । तथाऽक्षराद्विश्वमपिसंभवतीति ॥ ७ ॥ यथापृथिव्यामितिदृष्टांतोक्त्याप्राप्तपरिणामिकारणत्वशंकांनिरस्यन्नक्षराद्विश्वसंभवक्रमंदर्शयति ॥ **तपसेति** ॥ ब्रह्म अक्षराख्यं । तपसाआलोचनेन चीयतेसंबध्यते । ब्रह्म विश्वमहंस्रक्ष्यामीत्यालोचयामासेतियावत् । आलोचनवतोनपरिणामिकारणत्वमितिभावः । ततः आलोचनानंतरं । तत स्तस्माद्ब्रह्मणइतिवा । अन्नमभिजायते । अन्नात्प्राणःमनःसत्यंलोकाःकर्माणीतिशेषः । जायंते । कर्मसुजातेषुनिमित्तप्राप्त्याअमृतं तत्फलभूतंस्वर्गादिकंचजायतइत्यनुषंगः । अत्रान्नादिपदैःदेवाःजडानिचग्राह्याणि ॥ ८ ॥ ननुतपसाचीयतइतिब्रह्मणआलोचनमुक्तं । तदयुक्तं

उप० । तपसाचीयतेब्रह्मततोन्नमभिजायते । अन्नात्प्राणोमनःसत्यंलोकाःकर्मसुचामृतं ॥ ८ ॥

भूत्वाभवनंगीताभाष्यादावुपपादितं। तदभिप्रायेणतपसाचीयतइत्यादौज्ञानात्मकतपसःकादाचित्कत्वोक्तौबाधकाभावादितिज्ञेयं। तस्मादुक्तविशेषणविशिष्टादक्षरात् एतद्ब्रह्मनामरूपादिकंचजायतइतियोज्यं। ननुतपसाचीयतेब्रह्मेत्युक्तमेवब्रह्मतस्मादेतद्ब्रह्मनामेत्युच्यते। नचैतद्युक्तं। एकस्यैवजन्यजनकभावायोगादित्यतःएतद्ब्रह्मेत्यनूद्यव्याचष्टे॥ एतद्ब्रह्मचतुर्मुखइति॥ तत्रनिर्विशेषणब्रह्मशब्दप्रयोगात्ब्रह्मशब्दस्यपरब्रह्मार्थकत्वेपिप्रकृतेसविशेषणब्रह्मशब्दप्रयोगात्चतुर्मुखार्थकत्वमंगीकार्यमितिभावः॥ ॥९॥ इतिश्रीमदाथर्वणोपनिषद्भाष्यटिप्पण्यांउमर्जीकृष्णाचार्यविरचितायांमंत्रार्थेप्रथमःखंडः॥ १ ॥ ननुकर्मादिकंकेनप्रमाणेनविज्ञातंभवतीतिप्रश्नेअपरविद्ययाविज्ञातंभवतीतिप्रत्युत्तरमभिप्रेत्यापरविद्यानिरूपिता। एवंविज्ञातंचकर्मादिकंकस्मिन्विज्ञातेसतिसफलंभवतीतिप्रश्नेपरविद्याविषयपरमात्मज्ञानेनसफलंभवतीतिप्रत्युत्तरमभिप्रेत्यपरविद्यामुक्त्वातद्विषयःपरमात्मासंक्षेपविस्तराभ्यांनिरूपितः। तत्रकर्मादिकंभगवज्ज्ञानेनसफलंभवतीत्ययुक्तं। अन्यज्ञानेनान्यस्यसाफल्येपरमात्मज्ञानेननिषिद्धकर्मणोपिसाफल्यंस्यादित्यतिप्रसंगादित्याशंक्यकर्मादिकंपरमात्मज्ञानमुत्पाद्यतत्फलेनसफलंभवति। नचनिषिद्धकर्मपरमात्मज्ञानोत्पादकं। तद्विरोधात्। अतोनातिप्रसंगइतिभावेनपरमात्मज्ञानोद्देशेनस्ववर्णाश्रमोचितकर्माणिकर्तव्यानीतिविधातुंभगवत्स्तुतिरूपंमंगलमाचरति॥ तदेतदिति॥ तत्परविद्यागम्यं एतत् अदृश्यत्वादिगुणमक्षरं सत्यमेवनत्वर्थांतरमित्यर्थः। अत्रसत्यवचनादि

---

उप०। तदेतत्सत्यं। मंत्रेषुकर्माणिकवयोयान्यपश्यंस्तानित्रेतायांबहुधासंततानि। तान्याचरथनियतंसत्यकामाएषवःपंथाःसुकृतस्यलोके॥ १ ॥

रूपार्थांतरप्रतीतिनिरासायसत्यशब्दंव्याचष्टे ॥ **तदेतत्सत्यं भगवानिति** ॥ अत्रसत्यंभगवानित्येववक्तव्येयदधिकमुक्तं तदुक्तवा
क्यस्थसत्यशब्दव्याख्यानमेतदितिप्रदर्शनार्थं । सत्यशब्दस्यभगवद्वाचित्वेप्रमाणंत्वग्रेवक्ष्यतइतिध्येयं । एवंमंगलंकृत्वा इदानींपर
मात्मप्रीत्युद्देशेनविहितकर्माणिकर्तव्यानीत्याह॥ **मंत्रेष्विति** ॥ अत्रसत्यवचनकामाइतिप्रतीतिनिरासायसत्यकामाइत्येतद्व्याकुर्वन्ने
वव्यवहितत्वादन्वयमपिदर्शयति ॥ **तत्कामाःकर्माण्याचरथेति** ॥ तत्कामाःभगवत्प्रीतिकामाइत्यर्थः । तदुक्तं । भगवत्प्रीतिका
मैस्तुकार्यंकर्माखिलैर्नृभिरिति । सत्यवचनकामाइत्यर्थांगीकारेप्रकृतपरित्यागाप्रकृतस्वीकारप्रसंगइतिभावः । यद्यप्याचरथेतिलट्प्र
त्ययांतंनविधानानुकूलं तथापिव्यत्ययेनविध्यर्थकंभवति । आचरतेतिलोट्प्रत्ययांतपाठस्तुस्पष्टएवेतिज्ञेयं । प्राकृऋगाद्याःयदावि
ष्णोर्वाचकाःतदापरविद्याइत्युक्त्वासमर्थितं । इदानीमृगादीनामेवपरविद्यात्वेएतन्मंत्रसूचितंयुक्त्यंतरमप्याह॥ **तदेति** ॥ यदाभग
वत्प्रीत्यर्थंकर्माणिविधत्तेतदेत्यर्थः ॥ **सापीति** ॥ कर्मविधायकविद्यापीत्यर्थः ॥ **परविद्येति** ॥ वाक्यसमन्वयेनब्रह्मप्रतिपादक
त्वादितिभावः । अयमाशयः । परविद्यानामब्रह्मतात्पर्यकविद्या । प्रोवाचतांतत्वतोब्रह्मविद्यामितिज्ञापकात् । कर्मविधायकवि
द्यापिब्रह्मण्येवमहातात्पर्यवती । ब्रह्मप्रीत्युद्देशेनकर्मविधानात् । अतःकर्मविद्यायाःअवांतरतात्पर्येणकर्मविधायकत्वेपिब्रह्मण्ये
वमहातात्पर्यवत्त्वात्कर्मप्रतिपादकऋगादीनामेववाक्यसमन्वयेनपरविद्यात्वंसिद्ध्यतीति । ननुतथापिकर्माण्याचरथेतिविधानमयु
क्तं । प्लवाह्येतइतिवक्ष्यमाणमंत्रैःकर्मणांनिंदितत्वादित्यतआह ॥ **अन्यथेति** ॥ कर्मणांभगवद्विषयकत्वाभावइत्यर्थः । यज्ञरू ॥ १३ ॥

भा० । तदेतत्सत्यंभगवान् । तत्कामाःकर्माण्याचरथ । तदासापिपरविद्या । अन्यथाप्लवाह्येतेअदृढायज्ञरूपाः ।

पाइत्यतःपरमित्युच्यंतइतिशेषः । तथाचभगवदविषयककर्मनिंदाप्लवाइत्यादिमंत्रैःक्रियते । अतोभगवद्विषयककर्मविधानेपि
नोक्तदोषइतिभावः । अत्रमंत्रेकृतेत्वेकप्रकारेणैवसंतताानीत्याद्युत्तरभाष्यानुसारेणप्रथमार्धे कृतेत्वेकप्रकारेणैवसंतताानीत्याद्यध्या
हार्यं । यद्यपितथापीतिच ॥ **तदयंमंत्रार्थः** ॥ कवयोज्ञानिनो मंत्रेषु यानि कर्माणि समाधौमनसाऽपश्यन् प्रतिपाद्यत्वेनज्ञा
तवंतः । तानियद्यपि त्रेतायांत्रेतायुगे बहुधाभागवतैःप्रतिक्षणंभगवद्विषयत्वेन त्रैविद्यैरंतेभगवत्समर्पणेन द्वेषिभिरंतेसमर्पणंवि
नैवेत्येवंप्रकारत्रयेण संततानिप्रवर्तितानि । तथाचस्मृतिः । एवंत्रेतायांकेचिदन्येपृथक्तानिष्ट्वाविष्णावर्पयंतेनचान्यइति । कृत
युगेतुनैवं । किंतुसर्वाण्यपिकर्माणिभगवद्विषयत्वेनैवप्रवर्तितानीत्यपिग्राह्यं । तथापि हेसत्यकामाःभगवत्प्रीतिकामाःशौनकाद्याः
सर्वेषांगृहस्थाश्रमवतांसंग्रहायसत्यकामाइतिनिरंकुशबहुवचनेनसंबोधनमिदं । अन्यथासंबोध्यस्यशौनकस्यैकत्वाद्बहुवचनांतसं
बोधनानुपपत्तिः । यूयं तानि मंत्रोक्तसकलकर्माणि अग्निहोत्रादिगृहस्थकर्माणि शमादियतिकर्माणिच । एषांचकर्मत्वंश्रुत्या
दिनाकर्तव्यतयोक्तत्वं नतुपरिस्पंदत्वं । शमादीनांतदभावात् । नियतमितिक्रियाविशेषणं । नियमेनभगवद्विषयत्वेनैव । आच
रथ । लकारव्यत्ययःछांदसः । कुरुतेत्यर्थः । नन्वेतावता यथाकृतादियुगेभागवतैःकर्माणिकृतानि तथैवभवद्भिरपिकर्माणिक
र्तव्यानीत्युक्तं । तत्कुतः । यानित्रेतायांबहुधासंततानितान्येवकुतोनकर्तव्यानीत्याशंक्यत्रेतायुगानुष्ठितद्वितीयतृतीयप्रकाराभ्यां
कर्मानुष्ठानेमोक्षोनभवति । अनर्थस्यवक्ष्यमाणत्वात् । किंतुकृतयुगानुष्ठितप्रकारेणत्रेतायुगेभागवतानुष्ठितप्रकारेणचानुष्ठानेमो
क्षोभवति । अतोभगवद्विषयत्वेनैवकर्माणिकर्तव्यानीतिभावेनाह ॥ **एषइति** ॥ एषःभगवत्प्रीत्युद्देशेनकर्माचारः । पंथाइति

विधेयानुसारेणैषइत्युक्तं । वःयुष्माकं । सुकृतशब्दोभगवदर्थः । तदात्मानंस्वयमकुरुततस्मात्तत्सुकृतमुच्यतइत्यादिश्रुतेः । लोकशब्दस्तुज्ञानार्थः। लुक्दर्शनइत्यस्माद्धातोर्भावेघञिकृतेतदर्थलाभात् । लोकस्तुभुवनेजनइतिकोशानुसारेणरूढ्यालोकशब्दः प्रसिद्धलोकवाचीच । तदयमर्थः । सुकृतस्यब्रह्मणः । लोकइतिषष्ठ्यर्थेसप्तमी । लोकस्यज्ञानस्य तद्द्वाराश्वेतद्वीपादिपरब्रह्म लोकस्यच । पंथाःहेतुरित्यर्थः । त्रैविद्यानुष्ठितप्रकारेणद्वेष्यनुष्ठितप्रकारेणचकर्मानुष्ठानंत्विमंलोकंहीनतरंवाविशंतीतिवक्ष्यमाण रीत्यानर्थहेतुरित्येतत्सूचनायचतानित्रेतायामित्याद्युक्तं । अतःपरब्रह्मलोककामैर्भवद्भिस्तज्ज्ञानद्वारातल्लोकप्राप्तिहेतुत्वाद्भगव द्विषयत्वेनैवकर्माणिकर्तव्यानीतिभावः ॥ १ ॥ कर्माण्याचरथेत्यत्रकर्मशब्देनकर्तव्यतयाश्रुत्याद्युक्तधर्ममात्रंविवक्षितं । अन्यथाशमादियतिधर्माणामसंग्रहापत्तेः । तच्चकर्मानेकविधं । देवयज्ञब्रह्मयज्ञादिभेदात् । तत्रदेवयज्ञोनाम अग्निहोत्रादि होमः । तंसप्रकारंप्रपंचयति ॥ यदेति ॥ अत्रसमिद्धइत्यनेनआघारादिसमिंधनांतमंगजातंसूचयति । ततश्चसमिद्धेआघारा दिसमिंधनांतांगयुक्ते हव्यवाहनेअग्नौ यदार्चिर्ज्वाला । वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिरित्यमरोक्तेः । लेलायतेदीप्यते । लेलादी प्तावित्यस्मात्कंड्वादिभ्योयगितियक्प्रत्यये सनाद्यंताधातवइतिधातुसंज्ञायां लट्प्रत्यये व्यत्ययेनतस्यात्मनेपदेचसति रूपमेतत् । तदाआज्यभागावंतरेण । अथांतरेंतरा । अंतरेणचमध्येस्युरितिकोशादंतरेणेत्यस्यमध्यइत्यर्थः । तद्योगेआज्यभागावितिद्वि तीया । अंतरांतरेणयुक्तइतितद्विधानात् । ततश्चाज्यभागयोर्मध्यइत्यर्थः । अनेनपूर्वमाज्यभागोहोतव्यः । ततश्चर्वाद्याहुतिः ।

उप० । यदालेलायतेह्यर्चिस्समिद्धेहव्यवाहने । तदाज्यभागावंतरेणाहुतीःप्रतिपादयेत् ॥ २ ॥

ततः पुनराज्यभागोहोतव्यइतिहोमप्रकारंसूचयति । आहुतीःआहूयंतेदीयंतेएताइत्याहुतयः । होमांगद्रव्याणि । तत्रसमिधोब्रह्मचारिकर्तृकहोमांगद्रव्याणि । व्रीहियवपयोदध्यादीनिगृहस्थादिकर्तृकहोमांगानि । तानिद्रव्याणियथायथंप्रतिपादयेत् । दानपर्यायेषुस्पर्शनंप्रतिपादनमितिपाठात्दद्यादित्यर्थः ॥ २ ॥ एवंब्रह्मचर्याद्याश्रमत्रययोग्याअग्निकार्यौपासनाग्निहोत्रादिहोमाविहिताः । तेषांचनित्यत्वंविधिपूर्वकत्वंचसमर्थनीयं । एवमग्निहोत्रस्यदर्शादिसाहित्यएवसफलत्वंनान्यथा अतस्तदपिसमर्थनीयं । तदर्थंविपक्षेबाधकमाह ॥ **यस्येति** ॥ कर्तरिषष्ठीयं । अहुतमित्यत्रहुतमितिभावेक्तः । अर्थाभावेव्ययीभावोयं । होमाभावइत्यर्थः ॥ **सप्तमानिति** ॥ सप्तजिह्वाअस्यसंतीतिसप्तमानग्निः । मादुपधायाश्चमतोर्वोऽयवादिभ्यइतिमतुप्प्रत्ययमकारस्यवत्वाभावः । यवादिशब्दात्तन्निषेधात् । ततश्चयवमानितिवत्सप्तमानितिमतुप्प्रत्ययांतरूपंयुक्तं । तदयमर्थः । सप्तमानग्निःयस्याधिकारिणःअहुतंहोमाभावःयेनाधिकारसत्वेपिअग्निकार्यादिहोमोनक्रियतइतियावत् । तस्यलोकान्स्वर्गादीन् । आसम्यक् । हिनस्तिनाशयति । प्रतिबंधकोभवतीतियावत् । तदुक्तं । नायंलोकोस्त्ययज्ञस्यकुतोन्यःकुरुसत्तमेति । एवंसप्तमान्अग्निःयस्ययेनअविधिनाहुतंगृह्याद्युक्तविधिनाअहुतं । भावेक्तः । अग्निकार्यादिहोमोनकृतः । तस्यलोकान्हिनस्ति । एवंयस्याग्निहोत्रंअदर्शमपौर्णमासंच । दर्शश्चपौर्णमासश्चयागौपक्षांतयोःपृथक्इतिकोशात् । दर्शयागरहितंपौर्णमासयागरहितंच । अनाग्रयणंआग्रयणेष्टिरहितंआग्रयणनामकनूतनधान्यद्रव्यकेष्टिरहितं । अतिथिवर्जितं । स्वयमेवगृहंप्रत्यागतोतिथिः । अतिथिर्नागृहागतइतिकोशात् । तत्पूजारूपम

उप० । यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितंच । अहुतमवैश्वदेवमविधिनाहुतमासप्तमांस्तस्यलोकान्हिनस्ति ॥ ३ ॥

नुष्ययज्ञरहितं । अवैश्वदेवं वैश्वदेवपदमुपलक्षणं । वैश्वदेव वरुणप्रघास साकमेध सुनासीरीयाख्य चातुर्मास्येष्टिरहितं । यद्वावैश्वदे वहोमरहितं । उपलक्षणमेतत् । श्राद्धादिपितृयज्ञरहितं । बलिहरणाख्यभूतयज्ञरहितं । वेदाभ्यासाख्यब्रह्मयज्ञरहितंच । तस्यलो कान्हिनस्तीतिपूर्ववत् । तथाचाग्निकार्यौपासनाद्यकरणे विधिंविनैवहोमकरणेचानर्थसद्भावादग्निकार्यादिहोमानित्याविधिपूर्वकंकर्त व्याश्च ॥३॥ एवंदर्शादिहोमाख्यदेवयज्ञं वेदपाठाख्यब्रह्मयज्ञं श्राद्धादिपितृयज्ञं बलिहरणरूपभूतयज्ञं अतिथिपूजात्मकमनुष्यय ज्ञंचविना ऽग्निहोत्रकरणेऽनर्थसद्भावात् दर्शादिसहितमेवाग्निहोत्रंकर्तव्यमितिभावः । यदालेलायतइत्युक्तंविशदयन्नेवकर्मफलम प्याह ॥ कालीतिमंत्रद्वयेन ॥ या सुधूम्रवर्णा साचेतियोज्यं । देवीद्योतमाना विश्वरुचीचेत्यन्वयः । इति अनेनप्रकारेण । सप्त लेलायमानाःदीप्यमानाःअग्नेर्जिह्वाःयाःसंति । भ्राजमानेषुभ्राजमानासु एतेषुएतासुजिह्वासु लिंगव्यत्ययश्छांदसः । सामा न्येनपुंसकंवा । यःपुरुषःयथाकालंतत्तत्कर्मांगत्वेनविहितकालमनतिक्रम्य आहुतयःव्यत्ययेनद्वितीयार्थेप्रथमा आहुतीः । आद दायन्आसम्यक्मंत्रोच्चारणादिपूर्वकंददायन्ददत्सन् । गणरत्नमहोदधौकंड्वादिराकृतिगणइत्युक्तं । तेनकंड्वादिगणेऽपठिता दपि ददाइत्यस्मात्आङ्पूर्वकात्कंड्वादिभ्योयगितियक्प्रत्ययेसनाद्यंताधातवइतिधातुसंज्ञायांलट्प्रत्ययेतस्यशत्रादेशेचाददायन्नि तिरूपंबोध्यं । चरतेकरोति । कर्माणीतिशेषः । तंनयंतीत्यन्वयः । तत्रद्वेवाक्ये । सूर्यस्यरश्मयइत्येतद्विनैकंवाक्यंफल

उप० । कालीकरालीचमनोजवाचसुलोहितायाचसुधूम्रवर्णा । स्फुलिंगिनीविश्वरुचीचदेवीलेलायमानाइतिसप्तजिह्वाः ॥ ४ ॥ एतेषुयश्चरतेभ्राजमानेषुयथाकालंचाहुतयोह्या ददायन् । तंनयंत्येतास्सूर्यस्यरश्मयोयत्रदेवानांपतिरेकोधिवासः ॥ ५ ॥



कथनार्थं । अपरंवाक्यंएताइत्येतत्पदंविनातत्साधनकथनार्थं । तथाहि । भागवतकर्मकर्तारोद्विविधाः । अप्रतीकालंबनाः प्रतीकालंबनाश्चेति । तत्राद्याःव्याप्तदर्शिनोदेवादयः । यथोक्तं । अप्रतीकादेवताहिऋषीणांशतमेवच । राज्ञांचशतमुद्दिष्टंगं धर्वाणांशतंतथा । एतेधिकारिणोव्याप्तदर्शनेन्येनतुक्कचिदिति । प्रतीकालंबनास्तुद्विविधाः । देहालंबनाःप्रतीकालंबनाश्चेति । तत्रयेदेहांतर्गतभगवद्दर्शिनःऋष्यादयोमध्यमाधिकारिणस्तेदेहालंबनाः । मध्यमाधिकारिणांदेहांतर्दर्शित्वंचोक्तंतत्वप्रकाशिकायां । आत्मन्येवात्मानंपश्येदित्यनेनमध्यमाधिकारित्वंसूचितमिति । मनुष्योत्तमास्तुप्रतिमालंबनाः । तत्रैताआहुतयः । आहुति शब्दोभावसाधनः । होमाइत्यर्थः । स्ववर्णाश्रमोचितयज्ञदानतपःकर्माणीतिपरमार्थः । तंयजमानं । अप्रतीकालंबनमिति यावत् । यत्रवैकुंठेदेवानामेकःपतिःमुख्यस्वामीविष्णुःअधिवासःअधिकोवासोयस्यसः इतरलोकापेक्षयाआधिक्येनवसति । तंविष्णुलोकंनयंतिप्रापयंति । अप्रतीकाश्रयायेहितेयांतिहरिमेवत्वित्युक्तेः । एवंतं देहालंबनंप्रतिमालंबनंचयजमानं । यत्र सत्यलोकेदेवानांपतिःचतुर्मुखोऽधिवासः । उक्तार्थमेतत् । तंसत्यलोकंनयंति । तदुक्तं । प्रतीकंदेहादिकंतद्गतमेवयेनराःउपासते तेपुरतःसमाप्नुयुः । ब्रह्माणमिति । इयांस्तुविशेषः । देहालंबनःसत्यलोकमेवगच्छति । स्वदेहेब्रह्मदृष्ट्वैवगच्छेद्ब्रह्मसलोकतामित्यु क्तेः । प्रतिमालंबनास्तुमहरादिलोकेवसंति । अपक्कायेनतेयांतिवायुंवाहरिमेववा । स्थानमात्राश्रिताइत्युक्तेः । प्रतिमालंबनोपि महरादिलोकेबहुकालमुषित्वासंकर्षणमुखाग्निनाभूलोकादिदाहेजायमानेसत्यलोकमेवगच्छति । तेनदेहादिकमित्यनुव्याख्यानेप्र तिमालंबनस्यविष्णुलोकप्राप्तेःपूर्वंचतुर्मुखलोकप्राप्त्युक्तावपिनविरोधइतिध्येयं । ज्ञानफलेनैवकर्मणांसफलत्वमितिदर्शयितुंकर्म

णांविष्णवादिलोकप्राप्तिहेतुत्वोक्तिरितिध्येयं । ननुकथमुक्तयजमानस्यविष्णवादिलोकप्राप्तिः । देहाद्यनिष्टवत्वभावादित्यतोद्विती यंवाक्यंचरमदेहनाशोपपादनार्थंप्रवृत्तं । तत्रसूर्यस्यसूरिप्राप्यत्वेनसूर्यनामकस्यविष्णोःरश्मयःतेजांसियत्रहृदयदेशेदेवानामेकः पतिःविष्णुरधिवसति । तंहृदयदेशंनयंति । धातूनामनेकार्थत्वात्प्रकाशयंति । तदादेवानामित्याद्युक्तोहृदयस्थोविष्णुस्तंत्रिविधं यजमानमादायस्वतेजःप्रकाशितहृदयाग्रद्वारेणनयंति । वचनव्यत्ययः नयति । हृदयाद्बहिर्निष्क्रामति । यथोक्तं । तदाविष्णोः स्वतेजसा । द्योततेहृदयाग्रंचतेनद्वारेणकेशवः । निष्क्रामेज्जीवमादायेति ॥ ४-५ ॥ एवंहृदयादुत्क्रमणमुक्तं । इदानींहृदयादुत्क्रां तस्यदेहादुत्क्रांतिंविष्णवादिलोकप्राप्त्यर्थमर्चिरादिमार्गंचाह ॥ एह्येहीतीति ॥ अत्रापिवाक्यद्वयं । तमाहुतयःसुवर्चसःसूर्यस्य रश्मिभिर्यजमानंवहंतीत्येकवाक्यं देहादुत्क्रांतिप्रतिपादकं । तस्यायमर्थः । सुवर्चसःशोभनंवर्चोयासांतथाविधाःआहुतयः । भा गवतकर्माणीतियावत् । तंत्रिविधंयजमानं । सूर्यस्यप्रसिद्धस्य । रश्मिभिःनाडीस्थरश्मिभिः । तदुक्तं । सहस्रंवाआदित्यस्यरश्म यःआसुनाडीष्वातताः तत्रश्वेतःसुषुम्नोब्रह्मयानः । सुषुम्नायामाततःतेनप्रकाशेनैवनिष्क्रामतीति । ततश्चनाडीस्थरश्मिप्रकाशित नाड्यंतर्मार्गेणेतिलभ्यते । देहादुत्क्रांतंत्रिविधंयजमानं । तंबुद्धिस्थंतुरीयंवहंतिप्रापयंति । भागवतकर्मसामर्थ्येनहृदयादुत्क्रांतोजी वःसूर्यरश्मिप्रकाशितनाड्यंतर्मार्गेणगच्छन्देहादुत्क्रम्यतुरीयंप्राप्नोतीतियावत् । तदुक्तं । विष्णुस्तुरीयरूपेणद्वादशांतेव्यवस्थितः। मुक्तानांप्राप्यरूपोसाविति । अत्रनाडीष्वपिविशेषोस्ति। सुषुम्नापंचप्रभेदयुक्ता। मध्येसुषुम्नाविज्ञेयावज्रिकायोप्रकाशिनी। वैद्युताब्र ॥ १६ ॥

उप० । एह्येहीतितमाहुतयस्सुवर्चसःसूर्यस्यरश्मिभिर्यजमानंवहंति । प्रियांवाचमभिवदंत्योर्चयंत्यएषवःपुण्यःसुकृतोब्रह्मलोकः ॥ ६ ॥

ह्मनाडीतिसैवपंचप्रभेदिनी । पृष्टवामाग्रदक्षांतभेंदादिति । तथाचाप्रतीकालंबनःसुषुम्नामध्यगतब्रह्मनाड्यंतर्मार्गेणगच्छन्मूर्ध्नो निष्क्रामति। तदुक्तं। विष्णोर्लोकंपरंगच्छन्निष्क्रमेन्मूर्ध्नएवत्विति । अत्रगच्छन्नित्यतःप्राक्ब्रह्मनाड्यंतर्मार्गेणेतिशेषः । तेनाभिमतार्थसिद्धिः । देहालंबनस्तुब्रह्मनाडीभिन्नसुषुम्नाप्रभेदनाड्यंतर्मार्गेणगच्छन्देहादुत्क्रामति । तथैवब्रह्मणोलोकंसुषुम्नायाविभेदतइत्युक्तेः । प्रतिमालंबनस्तुपिंगलानाड्यंतर्मार्गेणगच्छन्देहादुत्क्रामति । देवयानंपिंगलाभिर्विषुवत्तांसुषुम्नयेतिभागवते । सुषुम्नयाकेचिद्गच्छंतीत्येवंसुषुम्नयायेगच्छंतितद्भिन्नानांपिंगलानाड्यागमनोक्त्यापरिशेषादितिज्ञेयं । एवंदेहादुत्क्राम्यतुरीयंप्राप्तस्यज्ञानिनोऽर्चिरादिमार्गंप्रतिपादयितुंसूर्यरश्मिभिरित्येतद्भिनाअपरंवाक्यं । तस्यार्थः । सुवर्चसःमार्गप्रापकत्वंसूचयितुंविशेषणमेतत् । आहुतयःआहूयतेहविरादिकमाभ्यइतिसंप्रदानेक्तिन्प्रत्ययः होमसंप्रदानदेवताअर्चिराद्याः केषांचिद्धोमसंप्रदानत्वाभावेपिच्छत्रिन्यायेनहोमसंप्रदानत्वंयुक्तमितिबोध्यं। आर्चिरादिदेवाश्च । उत्क्रांतस्तुशरीरात्स्वाद्गच्छत्यर्चिषमेवतु । ततोहिवायोःपुत्रंचयोसौनाम्नातिवाहिकः । ततोहःपूर्वपक्षंचाप्युदक्संवत्सरंतथा । तटितंवरुणंचैवप्रजापंसूर्यमेवच । सोमंवैश्वानरंचेंद्रंध्रुवंदेवींदिवंतथा । ततोवायुंपरंप्राप्यतेनैतिपुरुषोत्तममितिसूत्रभाष्योक्ताःज्ञेयाः । ततश्चार्चिराद्याःप्रधानवाय्वंताःदेवताः । ब्रह्मलोकःपरब्रह्मलोकः यस्मात्सुकृतःपुण्यः भगवद्विषयत्वेनकृतंयत्पुण्यंतेनसाध्यः यूयंचभागवतकर्माणः तस्माद्वोयुष्माकमप्रतीकालंबनानां । एषःअस्मदधिष्ठितलोकमार्गेणगम्यः । वइतिबहुवचनंगौरवात् । अन्यथातमित्येकवचनानुपपत्तेः । एवंब्रह्मलोकश्चतुर्मुखलोकः । वःदेहालंबनानां । एषःअस्मदधिष्ठितलोकमार्गेणगम्यः । एवमेवमहरादिलोकः । वःप्रतिमालंबनानां । एषःअस्मदधिष्ठि

तलोकमार्गेणगम्यः । तस्मात्हेअप्रतीकालंबन । हेदेहालंबन । हेप्रतिमालंबन । त्वंअस्मल्लोकमेहि । आदराद्विर्वचनं ।
संभ्रमस्त्वादरेभयइतिआदरभयरूपसंभ्रमेणप्रवृत्तौद्वेवाच्येइतिवार्तिकात् । एह्येहीतितंयजमानंप्रति । प्रियांवाचमभिवदंत्यः
अर्चयंत्यःस्वलोकप्राप्तंयजमानंपूजयंत्यश्चसत्यस्तंबुद्धिस्थंउत्तरोत्तरलोकस्थंअतिवाहिकादिदेवंविष्णवादिकंचवहंतिप्रापयंति । अ
त्रप्रधानवायोःसाक्षादेवपरापरब्रह्मप्रापकत्वं । अर्चिरादीनांत्वातिवाहिकादिदेवताप्राणद्वारापरब्रह्मादिप्रापकत्वं । तेनवहंती
त्यादिबहुवचनोपपत्तिरितिविवेचनीयं । नन्वेतन्मंत्रचतुर्थपादेपुण्यःसुकृतइतिपुनरुक्तिः । पुण्यश्रेयसीसुकृतंवृषइतिपुण्यसुकृ
तशब्दयोःपर्यायत्वाभिधानादित्यतोव्याचष्टे ॥ **भगवद्विषयत्वेनकृतएषवःपुण्यःसुकृतइति** ॥ एषवःपुण्यःसुकृतइति
सुकृतशब्दस्यभगवद्विषयत्वेनकृतइत्यर्थइतियोज्यं । वाक्यशेषस्थसुकृतशब्दव्याख्यानमेतदितिज्ञापयितुमेषवःपुण्यइत्यधिकांशो
दाहरणं । अत्रभगवद्विषयत्वेनकृतत्वंनामनाहंकर्ताहरिःकर्तातत्पूजाकर्मचाखिलं । अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच ।
तत्कुरुष्वमदर्पणं । इत्याद्युक्तप्रकारेणनाहंकर्ताकिंतुभगवानेवकर्ता इदंसर्वंकर्मभगवत्पूजात्मकं भगवानेवसर्वयज्ञानांभोक्तास्वा
मीचेत्याद्यनुसंधानपूर्वकंभगवदर्पणबुद्ध्याकृतत्वमितिबोध्यं । पुण्यशब्दस्यपुंस्त्वंच्छांदसं । तेनचस्ववर्णाश्रमोचितंसर्वंपुण्यं
विवक्षितं । नन्वेवंतर्हिब्रह्मलोकःसुकृतःपुण्यइतिपुण्यब्रह्मलोकयोस्तादात्म्यंप्रतीयते । तच्चबाधितमित्यतोलांगलंजीवनमि
तिवत्भगवद्विषयकंपुण्यंब्रह्मलोकसाधनमितिव्याख्येयं । तत्रविवक्षितंब्रह्मलोकशब्दार्थमाह ॥ **ब्रह्मलोकःपरब्रह्मलोक**

भा० । भगवद्विषयत्वेनकृतएषवःपुण्यःसुकृतः । ब्रह्मलोकःपरब्रह्मलोकः ।



**इति** ॥ **स्यादिदं**व्याख्यानं । यदिभगवद्विषयत्वेनकृतंसर्वंकर्मपरब्रह्मलोकसाधनमित्येतत्प्रमितंस्यात् । तदेवकुतइत्यतस्तत्रप्रमाण
माह ॥ **निष्काममिति** ॥ स्वर्गादिफलकामनाशून्यमित्यर्थः ॥ **ज्ञानपूर्वमिति** ॥ नाहंकर्तेत्याद्युक्तप्रकारेणभगवज्ज्ञानपूर्व
कमित्यर्थः । अत्रकर्मेतिविशेष्यमध्याहार्यं । तत्रैवनिष्कामत्वादिविशेषणसंभवादितिबोध्यं । ननुयदिभगवद्विषयत्वेनकृतस्यकर्मणो
विष्णुलोकहेतुत्ववत्स्वर्गादिहेतुत्वमपिस्यात्तदासुकृतःपुण्योब्रह्मलोकइतिविशिष्योक्तिरयुक्तास्यादित्याशंक्यउक्तकर्मणःस्वर्गाद्यहेतु
त्वेश्रुतिमाह ॥ **सयइति** ॥ सःप्रसिद्धःयोधिकारीलोकंप्रसिद्धं(लोकंसर्वाश्रयं)आत्मानंभगवंतं । एवेतिनियमसूचकः । उपास्ते
जानातिच । अस्यज्ञानिनःकर्म ज्ञानपूर्वकंस्ववर्णाश्रमोचितंकर्मेतियावत् । नक्षीयते । तदक्षयिमोक्षफलकं क्षयिस्वर्गादिफ
लकंनभवतीतिहप्रसिद्धमित्यर्थः। ननुकर्मैवनकर्तव्यं फलाभावात् । अकरणेऽनर्थाभावाच्च । ततःकुतोभगद्विषयत्वेनकर्मकरणं ।
कुतस्तरांचभगवद्विषयत्वेनकृतस्यकर्मणःपरब्रह्मलोकप्राप्तिसाधनत्वमित्याशंक्यकर्मणःकर्तव्यत्वंतावद्भगवद्गीतावाक्येनसमर्थय
ते ॥ **सहयज्ञाइति** ॥ इतिचेत्यतःपरंनिंदनादितिशेषः । ततश्चेत्युक्त्वाइतिनिंदनादित्यन्वयसंभवेनक्त्वाप्रत्ययोपपत्तिः । समा
नकर्तृकयोःपूर्वकालइतिसूत्रेणक्त्वाप्रत्ययविधानादितिज्ञातव्यं । सहयज्ञाइतिश्लोकेनकर्मणःफलमुक्त्वाएवंप्रवर्तितमितिश्लोकेन
कर्माकरणेऽनर्थउक्तः । अतःफलाभावस्याकरणेऽनर्थाभावस्यचासत्त्वात्स्ववर्णाश्रमोचितंकर्मकर्तव्यमेवेतिभावः । **सहयज्ञाः**

भा० । निष्कामंज्ञानपूर्वंयन्निवृत्तमिहचोच्यते । निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनमितिव्याससमृतौ । सयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतइतिचश्रुतिः ।
सहयज्ञाःप्रजाःसृष्ट्वेत्युक्त्वा एवंप्रवर्तितंचक्रंनानुवर्तयतीहयः । अघायुरिंद्रियारामोमोघंपार्थसजीवतीतिच ।

प्रजाःसृष्ट्वापुरोवाचप्रजापतिः। अनेनप्रसविष्यध्वमेषवोस्त्विष्टकामधुगितिश्लोकस्यायमर्थः। सह यज्ञेनविहितकर्मकलापेनवर्ततइ
तिसहयज्ञाः। कर्माधिकृताइतियावत्। वोपसर्जनस्येतिसहशब्दस्यपक्षेसादेशाभावः। प्रजाः त्रीन्वर्णान्। पुरा कल्पादौसृष्ट्वाउ
वाचप्रजापतिःविष्णुः। प्रजानांपालनाद्विष्णुःप्रजापतिरितीरितइत्युक्तेः। किमुवाचेत्यतआह ॥ अनेनेति ॥ हेप्रजाःयूयंअने
नयज्ञेनस्ववर्णाश्रमोचितधर्मेणप्रसविष्यध्वंइष्टकामानुत्पादयत। एतदेवविवृणोति ॥ एषइति ॥ एषयज्ञःवःयुष्माकंइष्टकाम
धुक् इष्टान्अभिमतान्कमान्काम्यानिफलानिदोग्धिप्रापयतीतितथा अभीष्टभोगप्रदोस्त्वित्यर्थः। एवंप्रवर्तितमितिश्लोकस्या
यमर्थः। हेपार्थ। इहअधिकारिवर्गे। यःप्राणी। एवंअन्नाद्भवंतिभूतानिपर्जन्यादन्नसंभवः। यज्ञाद्भवतिपर्जन्योयज्ञःकर्म
समुद्भवः। कर्मब्रह्मोद्भवंविद्धिब्रह्माक्षरसमुद्भवमितिपूर्वोक्तप्रकारेणपरमेश्वरेणप्रवर्तितंचक्रं। भूतव्यंग्याःवेदाः तद्व्यंग्यंब्रह्म
तज्जन्यंकर्म तज्जन्योयज्ञः। मंत्रपूर्वदेवतोद्देशेनद्रव्यत्यागोयज्ञः। तदितरक्रियाकर्मेतिविवेकः। यज्ञजन्यःपर्जन्यः तज्जन्यमन्नं अन्न
जन्यानिभूतानीत्येवं वेदब्रह्मादिचक्रं नानुवर्तयति स्वविहितकर्माकरणेननप्रवर्तयति। सप्राणी। अघायुःअघजनकमायुर्यस्य
सतथा। स्ववर्णाश्रमोचितकर्माकरणेनपापस्यैवप्राप्तेः। नकेवलमेतावत्। किंतुमोघंव्यर्थंजीवति। तज्जीवनमपिव्यर्थं। अधि
कारदेहप्राप्तावपितद्देहेकस्यापिधर्मस्याननुष्ठानात्। नन्वधिकारेप्राप्तेपिस्वविहितकर्मकरणेनचक्रंकुतोनानुवर्तयतीत्याशंक्यकर्मा
करणहेतुगर्भविशेषणमुक्तंइंद्रियारामइति। आरमणंआरामः। विषयोपभोगइतियावत्। इंद्रियैरारामोयस्यसतथा। विषयभो
गासक्तइतियावत्। तथाचविषयासक्त्याकर्मनकरोति। तेनपुण्याभावःप्रत्यवायप्राप्तिश्चभवतीतिभावः। नन्वस्त्वेवंकर्मणःकर्त

व्यत्वं । तथापितस्यभगवद्विषयत्वेनकर्तव्यत्वेभगवद्विषयत्वेनकृतस्यकर्मणःपरब्रह्मलोकप्राप्तिहेतुत्वेचनस्फुटंप्रमाणमस्ति । निष्काममितिस्मृतेरुपपादनसापेक्षत्वात् । तत्रनिष्काममितिविशेषणबलेनकर्मेत्यस्याध्याहार्यत्वात् । सहयज्ञाइतिगीतावाक्यंतुकर्ममात्रस्याभीष्टहेतुत्वंप्रतिपादयति । नतुभगवद्विषयत्वेनकृतस्येत्याशंक्यभगवद्विषयत्वेनकृतस्यकर्मणःपरब्रह्मलोकप्राप्तिहेतुत्वंतादृशकर्मणःकर्तव्यत्वंचश्रुत्यर्थाभ्यांसाधयत्प्रमाणमाह ॥ यांतीति ॥ मद्याजिनइत्यत्रसुप्यजातौणिनिस्ताच्छील्यइतिसूत्रेणताच्छील्येणिनिप्रत्ययः । अपिरभिव्याप्तौसाकल्येनेत्यर्थः । तथाचमांयजंतितच्छीलाःमद्याजिनः भगवानेवकर्तेत्याद्यनुसंधानपूर्वकंस्वोचितकर्मणासाकल्येनमत्पूजनशीलाःमांयांतीतिकृष्णवाक्यं । तेनभगवद्विषयत्वेनकृतस्यकर्मणःपरब्रह्मलोकप्राप्तिहेतुत्वंस्फुटमवगम्यते । कृष्णस्यपरब्रह्मतायाःविश्वरूपाध्यायेसम्यगुपपादितत्वात् । मद्याजिनइतिश्रुत्यर्थापत्त्यैवभगवद्विषयत्वेनकर्मकर्तव्यमित्यपिलभ्यते । ततोभगवद्विषयत्वेनकर्मणःकर्तव्यत्वेतादृशकर्मणःपरब्रह्मलोकप्राप्तिहेतुत्वेचस्फुटंप्रमाणंनास्तीतियदुक्तंतन्नेतिभावः। नकेवलंश्रुतार्थापत्त्याभगवद्विषयत्वेनकर्मणःकर्तव्यत्वंसिद्ध्यति । किंतुगीतायामेवभगवद्विषयत्वेनस्वोचितकर्माकरणेअनर्थोक्तेश्चेतिभावेनाह ॥ अहंहीति ॥ हिशब्दोयस्मादित्यर्थे । भोक्ताचेतिचशब्देनकर्तासमुच्चीयते । अहमेवेत्येवशब्दान्वयः । अंत्यचशब्देनपूज्यसमुच्चयः । तुशब्दोऽपिशब्दार्थः । तेनतथापीतिलभ्यते । तेपिमामेवकौंतेययजंत्यविधिपूर्वकमितिपूर्ववाक्यमत्रानुषंजनीयं । तदयमर्थः । येअन्यदेवताःयजंतेतेपिमामेवअविधिपूर्वकंयजंति । अविधिपूर्वकंस्वकृतंकर्मअंतेमय्ये

भा० । यांतिमद्याजिनोपिमामितिच । अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच । नतुमामभिजानंतितत्वेनातश्च्यवंतितइतिच ।

वसमर्पयंतीतियावत् । अविधिपूर्वकमित्येतद्विवृणोति ॥ अहंहीति ॥ अहमेवसर्वयज्ञानांभोक्ताकर्ताप्रभुःस्वामीपूज्यश्चे तिश्रुत्यादिप्रसिद्धं । तथापियस्मात्तेअन्यदेवतायाजिनः । मांतत्वेनसर्वयज्ञभोक्तृत्वादिनानाभिजानंति अतश्च्यवंतिस्वर्गभो गानंतरमधःपतंतीत्यर्थः । नन्वेवंतर्हिसर्वयज्ञभोक्तृत्वादिनाभगवज्ज्ञानंयस्यास्तितेनापिस्वविहितंकर्मकर्तव्यमेव । फलसद्भावा त्विपक्षेअनर्थप्राप्तेश्चेतिप्राप्तं । नचतद्युक्तं । यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः ॥ आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यत इतिगीतायामेवभगवज्ज्ञानेसतिकर्मनकर्तव्यमित्युक्तत्वादित्यतआह ॥ यस्त्वित्यादिना । उक्तत्वादित्यंतेन ॥ यस्त्वित्या दिगीतायांज्ञानिनःसर्वदाविहितकर्माकरणमुच्यते । कुर्याद्विद्वानित्यनेनज्ञानिनःकर्मविधानात् । किंत्वसंप्रज्ञातसमाधिद शायामेव । आत्मरतिरेवेत्यादिविशेषणानांतत्रैवसंभवात् । तथाचासंप्रज्ञातसमाधिदशायांभेरीताडनादावपिबाह्यार्थानुसंधाना भावात्तदाज्ञानिनःकर्माकरणेपिनप्रत्यवायः । अन्यदातुज्ञानिनापिस्ववर्णाश्रमोचितंकर्मकर्तव्यमेव । अतोभगवद्विषयत्वेनकर्म कर्तव्यमित्युक्तावपिनोक्तदोषइतिभावः । अप्येवपदाभ्यांयस्त्वितिवाक्यस्यासंप्रज्ञातसमाधियुक्तज्ञानिपरत्वाभावेभगवद्वाक्ययो र्विरोधापत्तिः । नहिव्याहतभाषीभगवानितिसूचितं । यस्त्वात्मरतिरेवेतिश्लोकस्यायमर्थः । यस्तुपुरुषः आत्मरतिरेवआत्मनः परमात्मनःरतिःदर्शनादिनिमित्तंसुखंयस्यसतथा । तथाचपरमात्मदर्शनादिनिमित्तंसुखंप्राप्तएवेत्यर्थः । एवशब्दपर्यवसिता र्थमाह ॥ आत्मतृप्तइति ॥ आत्मनापरमात्मप्रसादेनेतियावत् । तृप्तः परमात्मनोन्यत्रसर्वात्मनालंबुद्धिंप्राप्तइत्यर्थः । आत्मन्ये



भा० । यस्त्वात्मरतिरेवेत्युक्त्वापि कुर्याद्विद्वांस्तथासक्तइत्येवोक्तत्वाच ।

वसंतुष्टश्चेतिचशब्दःपूर्वविशेषणसमुच्चयार्थः । आत्मनिपरमात्मनिस्थित्येतिशेषः । असंप्रज्ञातसमाधिलक्षणयापरमात्मनिस्थित्यैवसं तुष्टःअन्यत्रसर्वात्मनाऽलंबुद्धिंप्राप्तः । तथाचयःपरमात्मदर्शनादिनिमित्तंसुखंप्राप्तः । परमात्मप्रसादेनासंप्रज्ञातसमाधिरूपयापर मात्मनिष्ठयाचपरमात्मनोन्यत्रसर्वत्रालंबुद्धिंप्राप्तः । तस्यासंप्रज्ञातसमाधिंपरित्यज्यस्ववर्णाश्रमोचितंकर्मकार्यंनविद्यतइति । स्व कर्मणाअसंप्रज्ञातसमाधिसमानस्यतदधिकस्यवाफलस्यानुत्पादादित्यर्थः । ननुयद्यपिकुर्याद्विद्वानितिज्ञानिनःकर्मविधीयते । तथा पिनफलार्थं । किंतुलोकसंग्रहार्थमेव । कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहमितिविशेषणात् । तथाचकुर्यादितिविधिबलेनज्ञा निनोपिकर्मावश्यंकर्तव्यमेवेतिकथमुच्यतइत्यतआह ॥ येत्वेतदिति ॥ मयिसर्वाणिकर्माणिसंन्यस्याध्यात्मचेतसा ॥ निराशीर्नि र्ममोभूत्वायुध्यस्वविगतज्वरइतिपूर्वश्लोकेज्ञानिनमर्जुनंप्रतियुद्धोपलक्षितस्ववर्णाश्रमोचितंसर्वंकर्मभगवद्विषयत्वेनकर्तव्यमित्यु क्त्वा येमेमतमिदंनित्यमनुतिष्ठंतिमानवाः ॥ श्रद्धावंतोनसूयंतोमुच्यंतेतेपिकर्मभिरितितदुत्तरश्लोकेभगवद्विषयत्वेनस्ववर्णाश्रमो चितकर्मानुष्ठानेमोक्षरूपंफलमुक्त्वा येत्वेतदभ्यसूयंतइतिश्लोकेभगवद्विषयत्वेनकर्माकरणेअनर्थउक्तः । अतोज्ञानिरपिनकेवलंलो कसंग्रहार्थंकिंतुस्वपुरुषार्थसिद्ध्यर्थंप्रत्यवायपरिहारार्थंचस्ववर्णाश्रमोचितंकर्मकर्तव्यमेव । ततश्चोक्तंयुक्तमेवेतिभावः । मयिसर्वा णीत्यादिश्लोकत्रयस्यायमर्थः । हेपार्थत्वंनिराशीः विष्णुभक्तिज्ञानाद्यतिरिक्तफलकामनाशून्यः । निर्ममःममेतिसुबंतप्रतिरूपक मव्ययंस्वामित्वाभिमानार्थकं । निर्गतंममयस्मात्सःनिर्ममः । स्वामित्वाभिमानशून्यइतियावत् । विगतज्वरःसंतापहेतुत्वाच्छो

भा० । येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतं । सर्वज्ञानविमूढांस्तान्विद्धिनष्टानचेतसइतिच ।

कएवज्वरशब्देनोक्तः । ऐहिकपारत्रिकदुर्यशोनरकपातादिहेतुशोकरहितश्चभूत्वा सर्वाणिकर्माणिमयिसंन्यस्य भगवानेवसर्वाणि कर्माणिकरोति तानिभगवत्पूजात्मकानिचेत्यनुसंधानरूपसंन्यासंकृत्वा । अध्यात्मचेतसा आत्मन्यधिकृत्यविद्यमानमध्यात्मं । विभक्त्यर्थेऽव्ययीभावः । अधिकरणशक्तिप्रधानकस्याप्यध्यात्मशब्दस्यात्मविषयकपरत्वं यथादोषाभूतमहःदिवाभूतारात्रिरित्यादावधिकरणशक्तिप्रधानकस्यापिदोषादिशब्दस्यशक्तिमत्परत्वंतद्वत् । तथाचाध्यात्मंपरमात्मविषयकंचतच्चेतश्चअध्यात्मचेतः । यद्वाअधिकश्चासावात्माचअध्यात्मा । अध्यात्मनिचेतःअध्यात्मचेतः । पक्षद्वयेपिभगवद्विषयकचेतसेत्यर्थः । परमात्मास्वामीअहंतुतदधीनःसन्राजाधीनभृत्यवत्सर्वंकरोमीत्येवंभगवदधीनत्वबुद्ध्येतितुपरमार्थः । युध्यस्व । उपलक्षणमेतत् । स्ववर्णाश्रमोचितंसर्वंकर्मकुर्वित्यर्थः । ज्ञानिभिरपिस्वविहितंकर्मकर्तव्यमित्युक्त्वातत्रप्रवृत्त्यर्थंतदनुष्ठानफलमाह । येमइति । येमानवाः ज्ञानिनः आत्मतृप्तश्चमानवइतिगीताभाष्येमानवशब्दस्यज्ञानिपरत्वेनव्याख्याततत्वात् । श्रद्धावंतः शास्त्राचार्योपदिष्टेऽर्थेऽननुभूतेप्येवमेवैतदितिविश्वासः श्रद्धाआस्तिक्यंनिष्ठेतिचोच्यते । तद्युक्ताःसंतः । अनसूयंतः गुणेषुदोषारोपोसूया । साचदुःखात्मकेकर्मणिप्रवर्तयन्नयंनकारुणिकइतिसर्वसुहृदिवासुदेवेगुरौचप्रसक्ता तामसूयांअकुर्वतःसंतः । मेमम मतंसंमतं इदंस्वविहितंकर्म नित्यंअनवरतं अनुतिष्ठंति । तेपिकर्मभिःनिवृत्तकर्मभिःमुच्यंते । आनंदोद्रेकरूपांमुक्तिंप्राप्नुवंतीत्यर्थः । किमुताज्ञानिनोज्ञानरूपेण मुच्यंतइतिकैमुत्यसूचनार्थोपिशब्दः । एवंकर्मानुष्ठानेफलमुक्त्वाफलाशारहितानांअननुष्ठानप्रसंगंवारयितुंकर्माकरणेऽनर्थमाह ॥ येत्वेतदिति ॥ तुशब्दःश्रद्धावद्वैधर्म्यसूचनार्थः । श्रद्धारहिताइत्यर्थः । अभ्यसूयंतःदुःखात्मकेकर्मणिप्रवर्तयन्नयंनकारुणिकइति

हरौगुरौचासूयांकुर्वंतोयेमेमतंएतत्स्वविहितंकर्मनानुतिष्ठंति । हेपार्थत्वंतानचेतसोदुष्टचित्तान् । अतएवसर्वज्ञानविमूढान्सर्वस्मि न्कर्मणिजीवेपरब्रह्मणिच यत्ज्ञानंत्रिविधं प्रमाणतःप्रमेयतःप्रयोजनतश्चतत्रविमूढान्मोहंप्राप्तान् । अतएवनष्टान्नरकाद्य नर्थभाजोविद्धिजानीहि इतितृतीयश्लोकार्थः । ननुयद्येवंभगवद्विषयकयज्ञादिकर्मावश्यंकर्तव्यमेव तर्हियत्याश्रमविलोपप्रसंगः । तत्रकर्मानुष्ठानाभावेप्रत्यवायस्यैवप्राप्तेरित्यतआह ॥ लोकेस्मिन्निति ॥ अत्र कर्मणोवश्यंकर्तव्यत्वे । आश्रमांतरवि रोधो यत्याश्रमविलोपप्रसंगोन । अयमाशयः । लोकेस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघ ॥ ज्ञानयोगेनसांख्यानांकर्मयोगेनयो गिनामितिगीतायां सांख्यानां ज्ञानयोगिनां ज्ञानयोगेन गृहस्थाश्रमंपरित्यज्ययत्याश्रमंगृहीत्वातदुचितशमाद्यनुष्ठानपूर्वकोय स्तत्वज्ञानोपायस्तेनमुक्तिर्भवति । योगिनां कर्मयोगिनां कर्मयोगेन गृहस्थाद्याश्रमोचितकर्मानुष्ठानपूर्वकोयस्तत्वज्ञानोपायस्तेन मुक्तिर्भवतीत्यनेनप्रकारेण । हेअनघ । मयापुरा अस्मिंल्लोकेअधिकारिवर्गे द्विविधाज्ञानयोगकर्मयोगरूपद्विविधसाधनज न्यानिष्ठास्वरूपेणस्थितिः मुक्तिरितियावत् । प्रोक्तेतिश्रीकृष्णेनार्जुनंप्रत्युक्तं । तेनयतीनामग्निहोत्रादिगृहस्थकर्माभावेपियत्याश्र मोचितशमाद्यनुष्ठानमस्त्येव । धर्माःपरमहंसानांब्राह्माएवशमादिकाइतिस्मृत्याशमादिरूपस्वाभाविकब्राह्मकर्मणांयतिधर्मत्वाभि धानात् । अतःस्ववर्णाश्रमोचितंकर्मयतिभिरपिकार्यमेवेतिनयत्याश्रमविलोपप्रसंगइति । यद्वा नन्वेवंयदिभगवद्विषयकयज्ञादि कर्मणाब्रह्मलोकप्राप्तिरूपमुक्तिस्तर्हियत्याश्रमिणांमुक्तिर्नस्यात् । अधिकाराभावेनयज्ञादिकर्मानुष्ठानाभावात् । तथाचयत्याश्रमवि

भा० । लोकेस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघेत्युक्तत्वाच्चनात्राश्रमांतरविरोधः ।

लोपप्रसंगः। नहिनिरर्थकेप्रेक्षावान्प्रवर्ततइत्यतआह ॥ लोकेस्मिन्निति ॥ तथाचगृहस्थानांभगवद्विषयकयज्ञादिकर्मप्रचुरयोगेन मुक्तिः। अतस्तैरुक्तविधयज्ञादिकर्मकार्यं । यतीनांतुज्ञानप्रचुरयोगेनमुक्तिः । अतोयत्याश्रमेपिमुक्तिसद्भावान्नयत्याश्रमविलो पप्रसंगइतिभावः। नन्वेतावतासर्वैरपिस्वविहितंकर्मभगवद्विषयत्वेनकर्तव्यमित्युपपादितं । तदयुक्तं । तथाशिष्टाचाराभावात्। नहिकदापिशिष्टेनभगवद्विषयककर्मकृतमस्तीत्यतआह ॥ त्रेतायामिति ॥ बहुधा विष्णुपूजात्मकत्वेन अंतेविष्णुसमर्पणपूर्वं कंनानादेवतापूजात्मकत्वेन । तेनविनैवअन्यदेवतापूजात्मकत्वेनेत्येवंबहुप्रकारेणयज्ञादिकर्माणिसंततानिकृतानिशिष्टैः । कृते कृतयुगे। एकप्रकारेणैवविष्णुपूजात्मकत्वेनैवसंततानि शिष्टैरित्यर्थः। तथाचकृतयुगेत्रेतायांचभागवतैर्भगवद्विषयककर्मणोनुष्ठि तत्वेनशिष्टाचारसद्भावात्आधुनिकैरपिभगवद्विषयकंकर्मकर्तव्यमितिभावः। त्रेतायांबहुधासंततानि । कृतेत्वेकप्रकारेणैवसंत तानीतिवाक्यद्वयोक्तार्थेप्रमाणमाह ॥ अग्निष्टोमेति ॥ अत्राद्यःश्लोकःकृतेत्वेकप्रकारेणैवसंततानीत्यत्रार्थेप्रमाणं । द्विती यश्लोकस्तुत्रेतायांबहुधासंततानीत्यत्रेतिविवेकः । यजंति कृतयुगइतिशेषः ॥ कारित्वादिति ॥ भगवत्सेवाकारित्वादि त्यर्थः। यजनप्रकारस्त्वित्थं । अनन्योपात्तनिरवधिकप्रवृत्तिनिमित्तयोगेनेंद्रशब्दवाच्यायइंद्रांतर्यामिणेहरयेस्वाहेति । अत्र हरेर्मुख्यतयातद्विशेषणत्वेनेंद्रस्यचयजनंसिद्ध्यति । एवमग्न्यादियजनेपिबोध्यं । एवंयजनेशिष्टाचारोप्यस्तीत्याह ॥ वसु

भा०। त्रेतायांबहुधासंततानि। कृतेत्वेकप्रकारेणैवसंततानि। अग्निष्टोमादिभिर्यज्ञैःसर्वदेवस्थितंहरिं। यजंतितांश्चकारित्वाद्वसुस्तस्मात्तथायजत्।



रिति ॥ वसुनामकःपुरुषइत्यर्थः। एवंकृतयुगेकर्मानुष्ठानप्रकारमुक्त्वात्रेतायुगेतमाह ॥ पृथक्पृथक्चेति ॥ केचिद्विष्णुसमर्पण पूर्वकं। केचित्तेनविनैवेत्येवंपृथक्पृथगित्यर्थः ॥ देवतागणानिति ॥ नानादेवानित्यर्थः। तेनगणशब्दोपपत्तिः। पुराणकर्ता स्वोक्तार्थेसंमतिंसूचयति ॥ त्रेतायांबहुधाततइति ॥ ततस्त्रेतायांबहुप्रकारेणयजनादेवाथर्वणोपनिषदित्रेतायांबहुधासंतता नीत्युक्तमितियोज्यं। नन्विंद्रादिनामभिस्तत्तद्देवतायजनंकर्तव्यं। नचविष्णोरिंद्रादिनामवत्त्वमस्ति । मानाभावात् । तत्कथं सर्वेपिजनाःसर्वदेवस्थितंहरिंयजंतीत्युक्तमित्यतआह ॥ यमिति ॥ योवायोःजनित्रंजनकः। यश्चदेवानामिंद्रादीनांदेवतमःअति शयेनदेवःइंद्रत्वादिप्रदः। अतएवप्रवृत्तिनिमित्तस्वामित्वादिनायमिंद्रमाहुः। एवमग्रेपि । सत्यमित्यत्रसत्योवायुरुदाहृतः। सा धुत्वंसत्यताप्रोक्तासाधुर्वायुर्हिसर्वतइत्यैतरेयभाष्योक्तेः। तस्मैवायवेविष्णवेच । एभ्यःइंद्रादिभ्यश्च । सोमंसोमादिद्रव्यं। जुहो मीत्यर्थः। अत्रजनित्रंवायोस्तस्मैसोममेभ्योजुहोमीत्यनेनमुख्यप्राणांतर्यामित्वेनेंद्रादिस्थितहरियजनंकर्तव्यं। इंद्रांतर्यामिमुख्यप्रा णांतर्गतविष्णवेस्वाहेत्यादिरूपेणेतिसूचयतीतिबोध्यं। एवमिंद्रादिस्थितहरियजनंकर्तव्यं। तदपिमुख्यप्राणांतर्यामित्वेनेत्युक्तं। त दिदंकृतयुगेनियतमेवेत्याह ॥ एवमिति ॥ जुहोमीत्येवमित्यर्थः। येकृतेजनाः तेवायोःपितरंदेवैःसहस्थितंविष्णुमेव । एवंतस्मै सोममेभ्योजुहोमीत्येवंप्रकारेणयजंति। अत्रसहशब्दप्रयोगादेवानामप्राधान्यंहरेःप्राधान्यंचसूचितं। सहयुक्तेऽप्रधानइतिसूत्रात्। तेन

भा०। पृथक्पृथक्चत्रेतायांयजंतेदेवतागणान्। यथाकृतेतथाप्राज्ञास्त्रेतायांबहुधाततइतिपाद्मे। यमिंद्रमाहुर्वरुणंयमाहुर्यंमित्रमाहुर्यमुसत्यमाहुः। योदेवानांदेवतमोज नित्रंवायोस्तस्मैसोममेभ्योजुहोमि। एवंवायोःपितरंविष्णुमेवयजंतिदेवैस्सहयेकृतेजनाः। एवंत्रेतायांकेचिदन्येपृथक्तानिष्ठाविष्णावर्पयंतेनचान्यइतिब्रह्मांडे।

देवानांहरेश्चविशेषणविशेष्यभावेनयजनंकर्तव्यमितियत्प्रागस्माभिरुक्तंतत्प्रमापितमितिज्ञातव्यं। एवंकृतयुगवत्त्रेतायामपिकेचिद्भगवताःयजंतीत्यन्वयः । अन्ये अनित्यत्रैविद्यानित्यत्रैविद्याश्चतान्देवान्पृथक्प्राधान्येनेष्ट्वातद्यजनंविष्णावर्पयंते । अन्येचाज्ञरूपनित्यसंसारिणःद्वेषिणश्चयजनंविष्णौनार्पयंतइत्यर्थः ॥ ६ ॥ एवं तान्याचरथनियतमित्यादिनामंत्रसंदर्भेणसंक्षेपविस्तराभ्यां यज्ञादिकर्मणांपरब्रह्मलोकप्राप्तिहेतुत्वमुपपादितं । इदानींतच्चपरब्रह्मलोकप्राप्तिहेतुत्वंसांगानांनिवृत्तानांचयज्ञादिकर्मणामेव । नतुविकलांगानांप्रवृत्तानांवाकर्मणामितिभावेनोभयविधकर्मणामनिष्टहेतुत्वमाह ॥ प्लवाह्येतइति ॥ अष्टादशोक्तमित्यस्य पुराणन्यायमीमांसाधर्मशास्त्रांगमाश्रिताः ॥ वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दश ॥ आयुर्वेदोधनुर्वेदोगांधर्वंचार्थशास्त्रकं। एताश्चतस्रोर्थविद्याःविद्याअष्टादशस्मृताइत्युक्ताष्टादशविद्योक्तमित्यर्थः। तत्रत्रैवर्णिकानांवेदावगतं तदन्येषांधर्मशास्त्राद्यवगतमितिविवेक्तव्यमितिकेचिदाहुः। टीकाकारास्तु । ऋत्विजःषोडश यजमानः एतन्निरीक्षकःसभ्यश्चेत्यष्टादशानांपुरुषाणामुक्तमितिव्याचक्षते। उद्दिश्यदेवताद्रव्यत्यागोयज्ञस्तदितरक्रियाकर्मेतिविवेकः।एतच्छ्रेयइत्येतदनंतरमितिशब्दोध्याहार्यः । मूढाइत्यस्यावृत्तिः।तत्रैकस्यमिथ्याज्ञानिनइतिअपरस्याज्ञाइत्यर्थः।ततश्चायंमंत्रार्थः। एषुयज्ञादिषुअष्टादशोक्तमष्टादशविद्योक्तं ऋत्विजःषोडशएकोयजमानःसभ्यश्चैकइतिअष्टादशानांपुरुषाणांकर्तव्यतयोक्तमितिवा। कर्म अंगभूतंयज्ञेतरकर्म।अवरंअपकृष्टं न्यूनमितियावत्। एतेयज्ञरूपाः देवतोद्देशेनद्रव्यत्यागोयज्ञः। दानादेरुपलक्षणमेतत् । ततश्चयज्ञदानतपोरूपाःप्लवाःनदीतरणोपायविशेषाः। ॥ २२ ॥

भा० । प्लवाह्येतेअदृढायज्ञरूपाअष्टादशोक्तमवरंयेषुकर्म । एतच्छ्रेयोयेभिनंदंतिमूढाजरामृत्युंतेपुनरेवापियंति ॥ ७ ॥

उडुपंतुप्लवःकोलइत्यभिधानात् । अदृढाः ब्राह्मणादिवर्णानांसंकरजातीनांचविहितंकर्म । यद्यंगविकलंतदातादृशकर्मणा नाभीष्टसिद्धिर्भवति ।प्रत्युतानर्थंभवति । यथाअदृढप्लवैर्महानद्यादितरणंकुर्वतामिष्टसिद्धिर्नभवतिकिंतुअनर्थएवतद्वदित्यर्थः । एवंविकलांगकर्मणामनिष्टहेतुत्वमुक्तं । इदानींप्रवृत्तकर्मणामनिष्टहेतुत्वंदर्शयति ॥ एतदिति ॥ एतत्यज्ञादिकमेवश्रेयःअतिशयेनप्रशस्यंस्वप्राधान्येनैवफलजनकमितियावत् । इतिमूढाःमिथ्याज्ञानिनः यद्वामूढाःअज्ञाःसर्वथापिविष्णुनिश्चयशून्याःतद्वेषशून्याश्च । एवंभूताःयेराजसतामसाःतेस्वर्गकामनयायज्ञंकुर्वंतिचेत्तदाराजसयागकरणाद्विष्णुश्रद्धाभावादिंद्रलोकाख्यस्वयोग्यस्वर्गकामाच्चसांकल्पिकस्वर्गप्राप्त्याभिनंदंति । सुखमनुभवंति । सांकल्पिकस्वर्गभोगानंतरंचमृत्युमेवमृत्युरिवमृत्युःदुःखसाधनत्वान्मरणसदृशंनरकमेवापियंतिप्रविशंति । पुनरित्यनेनपुनःपुनरेवंभावएवतेषांनकदाप्यन्यथाभावइतिसूचयति । यदितुतेराजसतामसाःयज्ञंनकुर्युःतदाजरा । द्वितीयार्थेप्रथमा । जरां जराप्रापकंनरलोकमितियावत् । अपियंतिप्रविशंति । यदितुतेराजसतामसाःनिषिद्धंकर्मकुर्वंतितदामृत्युंनरकमपियंतीतियोज्यं । तथाचस्मृतिः । यागात्तुराजसात्स्वर्गःसांकल्पिकउदाहृतः । लोकःसदीनदेवानांसनाम्नांवासवादिभिः । विष्णावश्रद्धयायोग्यकामाच्चैषांपुनर्भवेत् । नरकंचविनायज्ञंराजसानरलोकगाः । निषिद्धंकर्मकुर्युश्चेदीयुस्तेनरकंध्रुवमिति ॥ ७ ॥ प्रकृतानांराजसतामसानांस्वरूपंदर्शयन्नेवएतच्छ्रेयइतिवाक्योक्तंविशदयति ॥ अविद्यायामंतरइति ॥ अत्राविद्यापदमीश्वरेच्छावाचि । महामायेत्यविद्येतिनियतिर्मोहिनीतिच । प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यतइत्युक्तेः । भाव

उप० । अविद्यायामंतरेवेष्टयमानाःस्वयंधीराःपंडितंमन्यमानाः । जंघन्यमानाःपरियंतिमूढाअंधेनैवनीयमानायथांधाः ॥ ८ ॥

रूपाज्ञानार्थंकंच । अथाज्ञानमविद्याहंमतिस्त्रियामितिकोशात् । तृतीयार्थेसप्तमी । इदंचपंडितंमन्यमानाइत्यादौहेतुः । अंतरइत्यस्यमध्यइत्यर्थः । अंतरंतुपराधीनइत्युपक्रम्यबहिर्मध्यावधिष्वपीत्यनुशासनात् । सत्वरजस्तमसामितिशेषः । मध्यत्वंचैकप्रकारत्वंविवक्षितं । तदयंमंत्रार्थः । अंतरेसत्वरजस्तमसांमध्ये । तृतीयार्थेसप्तमी । मध्यावस्थयाएकप्रकारतयेतियावत् । वेष्टयमानाबध्यमानाएकप्रकारंगुणत्रयोपेताराजसतामसाइत्यर्थः । राजसतामसानामेकप्रकारगुणत्रयोपेतत्वंसमोवाश्रुतिपात्रकमितिगीतातात्पर्यनिर्णयोदाहृतप्रमाणसिद्धं । तट्टीकायांसमएकप्रकारंगुणत्रयोपेतइतिव्याख्यानादितिबोध्यं । धीराःयागाद्युपयुक्तज्ञानवंतः । अविद्यायांअविद्ययाईश्वरेच्छयाभावरूपाज्ञानेनच । पंडितंमन्यमानाः । पंडितंभिन्नपदं । एकपदत्वेपंडितंमन्याःपंडितमानिनइतिवास्यात् । आत्ममानेखश्चेतिसूत्रेणखश्प्रत्ययणिनिप्रत्यययोर्विधानात् । एकवचनंतुसमुदायापेक्षं । नलोकेतिषष्ठीनिषेधात्कर्मणिद्वितीया । यथाचपंडितान्आत्मनोजानमानाःपंडितत्वाभिमानयुक्ताइतियावत् । जंघन्यमानाःहनहिंसागत्योरित्यस्मात्क्रियासमभिहारेयङ्प्रत्ययांतात्लटःशानजादेशेरूपमेतत् । पुनःपुनःअतिशयेनवाछागादिपशून्घ्नंतः । उपलक्षणमेतत् । अग्निहोत्रादिकंकुर्वाणाइत्यपिग्राह्यं । मूढाःस्वयमित्यस्यात्रान्वयः । स्वयंस्वात्मना । स्वदोषेणेतियावत् । मूढाःयज्ञादिकमेववरिष्ठमितिमोहयुक्ताःराजसतामसाःअंधेननीयमानाःअंधाःयथापरियंतिपरिभ्रमंतितथानरलोक सांकल्पिकस्वर्ग नरकेषुपुनःपुनर्गच्छंति । एवशब्देनोक्तंनरकादित्रयगंतृत्वंनियतमेव । नतुकदाचिदपिसंसारान्मुक्तिरितिसूचयतीतिबोध्यं ॥ ८ ॥ एवंनित्यसंसारिविशेषा



णांराजसतामसानांप्रवृत्तकर्मकरणेनानर्थउक्तः । इदानींतदन्येषांप्रवृत्तकर्मकारिणामनिष्टमाह ॥ अविद्यायांबहुधेति ॥ अत्रवक्ष्यमाणेबहुधावर्तमानत्वादौ । सर्वत्रनिमित्तकथनार्थंअविद्यायामित्युक्तं । तृतीयार्थेसप्तमी । वर्तमानाइत्यस्यावृत्तिः । तदयमर्थः । बहुधा मुक्तियोग्यनित्यसंसारितमोयोग्यभेदेन वर्तमानाःजीवाः । अविद्यायांअविद्ययाईश्वरेच्छयाभावरूपाज्ञानेनच । यत्यस्मात् । बहुधावर्तमानाः नानादेवतापूजकत्वरूपबहुप्रकारेणवर्तमानाः । यस्माच्चवयंवयमेवकृतार्थाःकृतकृत्याइतिअभिमन्यंति । परस्मैपदंछांदसं । अभिमन्यंते । कर्तृत्वाभिमानयुक्ताइतिफलितार्थः । उपलक्षणमेतत् । रागद्वेषादिदोषयुक्ताश्चेत्यपिग्राह्यं । यस्माच्चबालाःबालसदृशाः यथाबालास्तथासर्वदाविष्णुस्मरणशून्याइत्यर्थः । यस्माच्चरागात्रागेणस्वर्गादिफलकामनयाकर्मिणःयज्ञादिकर्मकर्तारःयस्माच्चनप्रवेदयंति । स्वार्थेणिच् । विष्णुमितिशेषः । सर्वयज्ञभोक्तृत्वादिनासर्वप्रकारेणविष्णुंनजानंतीत्यर्थः । तेनबहुधेत्यादिनायन्नानादेवतापूजनादिकमुक्तंतेनहेतुनेत्यर्थः । आतुराःत्वरमाणाःसंतः । त्वरयैवेतियावत् । क्षीणलोकाःसंतःच्यवंते । यज्ञादिसाध्यलोकभोगानंतरमधःपतंतीत्यर्थः । ननु सम्यक्त्वापरिज्ञानादन्यकर्मकृतेरपि ॥ स्वर्गादिप्रार्थनाच्चैवरागादेश्चापरिक्षयात् ॥ सदाविष्णोरस्मरणात्त्रैविद्योनाप्नुयात्परमितिगीतातात्पर्योक्तस्मृतौपरब्रह्मप्राप्तिविरोधित्वेनयेदोषाउक्ताःतेषामेवसम्यक्त्वापरिज्ञानादीनामत्रमंत्रेलोकच्यवनहेतुत्वमुच्यते । तेनक्षीणलोकाश्च्यवंतइत्युक्तत्वात् । नचतद्युक्तं । नित्यसंसारिणांतमोयोग्यानांचनानादेवतापूजनादिसंभवेपिमुक्तियोग्यानांभाग

उप० । अविद्यायांबहुधावर्तमानावयंकृतार्थाइत्यभिमन्यंतिबालाः । यत्कर्मिणोनप्रवेदयंतिरागात्तेनातुराःक्षीणलोकाश्च्यवंते ॥ ९ ॥

वतत्वेनान्यदेवतापूजनाद्यभावात् । यथोक्तं । अनन्यदेवतायागाद्भक्त्युद्रेकादकामनात् । सदायोगाच्चवैशिष्ट्यंत्रैविद्याद्द्वैषण
वादपि । स्याद्धिभागवतस्यैवेति । तत्कथंमुक्तियोग्यादिभेदेनत्रिविधानामपिजीवानांनानादेवतापूजनादिनानाहेतुनास्वर्गलोकच्यु
तिरुक्तेतिचेत् । अत्रब्रूमः । यदुक्तंमुक्तियोग्यानामन्यदेवतापूजनादिकंनास्तीति तत्सत्यं । किंतुसद्गुरूपदेशेनसर्वप्रकारेणविष्णावा
धिक्यज्ञानंयदातदैव । यदातुसद्गुरूपदेशाभावात्सर्वप्रकारेणविष्णावाधिक्यज्ञानंनास्तितदाफलकामनयायज्ञाद्यनुष्ठानात्स्वर्गच्यु
तिरस्त्येव । यथोक्तं । ये नजानंतितंविष्णुंयाथातथ्येनसंशयात् । जिज्ञासवश्चनितरांश्रद्धावंतःसुसाधवः । निर्णेतॄणामभावेनकेवलं
ज्ञानवर्जिताः । तेयाज्ञिकाःस्वर्गभोगक्षयेयांतिमनुष्यतामिति । अतोमुक्तियोग्यानामप्यन्यदेवताभजनादिनास्वर्गच्यवनोक्तौन
विरोधः ॥ ९ ॥ ननुक्षीणलोकाश्च्यवंतइत्यत्रोक्तोलोकःकः तत्क्षयोपिननाशः । जगत्स्थितिकालेतदभावात् । च्यवनानंतरंचकिं
भवतीत्याशंक्यलोकोत्रस्वर्गः । तत्क्षयोनामस्वर्गलोकेसुखानुभवक्षयः । च्यवनानंतरंचमनुष्यलोकस्यतमसोवाप्राप्तिर्भवतीतिभावे
नाविद्यायांबहुधेतिमंत्रोक्तंविशदयन्नेवस्वर्गलोकप्राप्तौप्रयोजकांतरमप्याह ॥ इष्टापूर्तमिति ॥ नन्वत्रमंत्रेइमंलोकंहीनतरंवावि
शंतीत्युच्यते । तत्रेमंलोकंकेविशंति । केचहीनतरंलोकंविशंति । नचैकस्यक्रमेणोभयप्राप्तिरितिवाच्यं । वाशब्दविरोधादित्यपेक्षा
यामाह ॥ विष्णोरिति ॥ सर्वयज्ञभोक्तृत्वादिसर्वप्रकारेणोत्तमत्वंव्यावर्तयितुंकिंचिदित्युक्तं । तथाचगुणैरत्युत्तमत्वंजानंतइत्य

उप० । इष्टापूर्तंमन्यमानावरिष्ठंनान्यच्छ्रेयोवेदयंतेप्रमूढाः । नाकस्यपृष्ठेसुकृतेतेनुभूत्वाइमंलोकंहीनतरंवाविशंति ॥ १० ॥

भा० । विष्णोःसर्वेभ्यःकिंचिदुत्तमत्वंजानंतइमंलोकमाविशंति । साम्यंहीनत्वंवाजानंतो हीनतरंतमएवविशंति । देवेभ्यउत्तमंविष्णुंराजवद्यस्तुमन्यते । याजीसमानुषं

र्थः । अनेनवरिष्ठंनान्यच्छ्रेयोवेदयंतइत्यंशोव्याख्यातः । तत्प्रकारंचदर्शयिष्यामः । प्रमूढाइत्येतद्व्याचष्टे ॥ **साम्यंहीनत्वंवा जानंतइति** ॥ ब्रह्मादिसाम्यंतद्धीनत्वंवाजानंतइत्यर्थः ॥ **तमएवेति** ॥ साम्यहीनत्वज्ञानिनांस्वर्गभोगक्षयानंतरंमर्त्यलोकप्राप्ति व्यवच्छेदार्थमेवशब्दः । उक्तार्थेप्रमाणमाह ॥ **देवेभ्यइति** ॥ यःराजवत् । यथाराजाविद्वदविद्वज्जनापेक्षयाऐश्वर्यगुणेनैवोत्त मः । नतुपांडित्यादिधर्मेण । तथाविष्णुंगुणैरेवदेवेभ्यउत्तमंमन्यतइत्यर्थः । तुशब्दश्चशब्दार्थः । तेननानादेवतापूजकइतिलभ्य ते । याजीति नंदिग्रहीत्यादिनाग्रह्यादित्वात्कर्तरिणिनिप्रत्ययः । अंतेविष्णौयज्ञादिकंसमर्पयन्नित्यर्थः । इतःपरंस्वर्गंभुक्त्वेतिशे षः ॥ **साम्यहीनत्वविदिति** ॥ ब्रह्मादिसाम्यतद्धीनत्वज्ञानीत्यर्थः । ननुयदुक्तंसाम्यंहीनत्वंवाजानंतस्तमोविशंतीति । तद युक्तं । भगवद्गीताविरोधात् । तथाहि । त्रैविद्यामांसोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयंते । तेपुण्यमासाद्यसुरेंद्रलोकमश्नंतिदि व्यान्दिविदेवभोगान् । तेतंभुक्त्वास्वर्गलोकंविशालंक्षीणेपुण्येमर्त्यलोकंविशंतीतिगीतायांत्रैविद्याइतिसामान्यश्रवणात् । सर्वेषा मपित्रैविद्यानांस्वर्गभोगक्षयानंतरंमर्त्यलोकप्राप्तिरुच्यते । मुक्तियोग्यनित्यसंसारितमोयोग्यभेदेनत्रिविधाअपित्रैवर्णिकजीवाःत्रै विद्याएव । त्रिविधाविद्यात्रिविद्या । तामधीयतेविदंतिवात्रैविद्याइतिनिर्वचनलभ्यस्यवेदत्रयाध्ययनतदर्थज्ञानरूपस्यत्रैविद्यश ब्दप्रवृत्तिनिमित्तस्योक्तत्रिविधजीवेषुसद्भावात् । ततश्चसाम्यादिमिथ्याज्ञानिनामपित्रैविद्यत्वात्तेषामपिगीतानुसारेणस्वर्गभोगक्ष यानंतरंमर्त्यलोकप्रवेशनमेववक्तव्यं । तत्कथंगीताविरुद्धंतमःप्रवेशनंभाष्येतदुपात्तस्मृतौचोक्तमित्यतआह ॥ **त्रैविद्यामामि**

यातिसाम्यहीनत्ववित्तमइतिच । भा० । त्रैविद्यामामितितु येप्यन्यदेवताभक्ताः तेपिमामेवकौंतेययजंति अहंहिसर्वयज्ञानांभोक्तेत्युक्तत्वादज्ञानपूर्वयाजिनस्त्रैविद्याः

ति ॥ त्रैविद्यामामित्यत्रतुअज्ञानपूर्वयाजिनःत्रैविद्याविवक्षिताइत्यन्वयः । केवलाज्ञत्रैविद्यानांमिथ्याज्ञानित्रैविद्यानांचव्यावृ
त्त्यर्थमज्ञानपूर्वयाजिनइतिविशेषणं । अज्ञानपूर्वविष्णुयाजिनइत्यर्थः । मामिष्ट्वेत्युक्तत्वाद्विष्णुयाजिनइतिव्याख्यातं । अज्ञानां
विष्णुज्ञानाभावेनमिथ्याज्ञानिनांविष्णुद्वेषित्वेनतद्याजित्वाभावात्तद्व्यावृत्तिः । अत्रापियेभागवतत्रैविद्याःसम्यग्ज्ञानानंतरंविष्णु
याजिनस्तद्व्यावृत्त्यैअज्ञानपूर्वेत्युक्तं । सर्वयज्ञभोक्तृत्वादिसर्वप्रकारेणविष्णवज्ञानपूर्वकत्वमेवाज्ञानपूर्वकत्वमिहविवक्षितं । तेनसम्य
ग्ज्ञानिभागवतव्यावृत्तिः । तेषामुक्तविधाज्ञानाभावेनतत्पूर्वकंविष्णुयाजित्वाभावात् । तथाचमुक्तियोग्यविशेषाःअनित्यत्रैविद्याः
नित्यसंसारिविशेषाःनित्यत्रैविद्याश्चगीतायांत्रैविद्यपदेनविवक्षिताइत्युक्तंभवति । ननुयदुक्तं त्रैविद्यामामित्यत्राज्ञानपूर्वयाजिनस्त्रै
विद्याएवविवक्षिताइतितत्कुतइत्याशंकानिरासाययेप्यन्यदेवतेत्यारभ्योक्तत्वादित्यंतमभिहितं । गीतायामेव येप्यन्यदेवताभक्ताय
जंतेश्रद्धयान्विताः । तेपिमामेवकौंतेययजंत्यविधिपूर्वकमितिश्लोकेनभक्तिश्रद्धापूर्वकमन्यदेवतायाजिनोपियज्ञांतेमामेवाविधिपू
र्वकंयजंतीत्युक्ताविधिपूर्वकत्वविवरणार्थेनअहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच । नतुमामभिजानंतितत्वेनातश्च्यवंतितेइत्युत्तरश्लोके
नसर्वयज्ञभोक्तृत्वादिनासर्वेणप्रकारेणभगवज्ज्ञानाभावात्च्यवंतीत्युक्तत्वादित्यर्थः । तथाचत्रैविद्याइत्यादिभगवद्गीतायांसर्वय
ज्ञभोक्तृत्वादिनासर्वेणप्रकारेणभगवज्ज्ञानपूर्वकंराजवद्देवोत्तमत्वज्ञानपूर्वकंचभगवद्याजिनएवत्रैविद्यशब्देनविवक्षिताः । नतुसा
म्यहीनत्वज्ञानिनोपि । अन्यथाप्रकरणविरोधात् । ततश्चसाम्यहीनत्वज्ञानिनांतमःप्राप्तिकथनेपिनभगवद्गीताविरोधइतिभा
वः । ननूक्तत्रैविद्यशब्दप्रवृत्तिनिमित्तंत्रिविधत्रैवर्णिकजीवेषुसर्वदास्ति । ततस्तेसर्वेपिनित्यत्रैविद्याएव । तथाचकेचिन्नित्यत्रै



विद्याःकेचिदनित्यत्रैविद्याइतिप्राचामाचार्याणांकथंव्यवहारइतिचेत् । उच्यते । त्रैविद्यस्त्वपरोधर्मोनानादैवतपूजनं । तत्रापिविष्णु
र्ज्ञातव्यःसर्वेभ्योप्यधिकोगुणैः । प्रवर्तयतियज्ञाद्यमंततस्त्वेवविष्णवे । त्रैविद्यधर्मापुरुषःस्वर्गंभुक्त्वानिवर्ततइतिस्मृत्युक्तत्रैविद्यध
र्मोयेषामस्तीत्यर्थेत्रैविद्यशब्दात्अर्शआदिभ्योजितिअच्प्रत्ययेकृतेनिष्पन्नःत्रैविद्यशब्दःपारिभाषिकत्रैविद्यधर्मविशिष्टपुरुषपरः ।
तत्रमुक्तियोग्याःयदानिर्णेतॄणामभावेनविष्णोःसर्वप्रकारेणोत्तमत्वंनजानंतितदात्रैविद्यधर्मंकुर्वंति । यदातुनिर्णेतृसद्भावेनविष्णो
स्तत्वंसम्यग्जानंतितदात्रैविद्यधर्मंनकुर्वंतिकिंतुभागवतधर्ममेव अतस्तेऽनित्यत्रैविद्याः । कदाचित्रैविद्यधर्मानुष्ठानेपिसर्वदातदभा
वात् । नित्यसंसारिविशेषाःराजसराजसास्तुसर्वदात्रैविद्यधर्ममेवकुर्वंति । नतुकदाचिदपिभागवतधर्मं । तेननित्यत्रैविद्याइत्युच्यं
ते । एतदभिप्रायेणनित्यत्रैविद्याअनित्यत्रैविद्याइतिप्राचांव्यवहारोयुज्यतइतिबोध्यं । ततश्चायंमंत्रार्थः । इष्टापूर्तं । इष्टंचपू
र्तंचेतिद्वंद्वः । सर्वोद्वंद्वोविभाषयैकवद्भवतीत्येकवद्भावः । अन्येषामपिदृश्यतइतिदीर्घः । इष्टंयजनं । पूर्तंकूपादिखननंअन्नदाना
दिकंच । अथक्रतुकर्मेष्टंपूर्तंखातादिकर्मचेत्यमरोक्तेः । नानादेवतापूजात्मकमितिशेषः । ततश्चयेमन्यमानाः । अन्यदैवतपूजापि
यस्मिन्नंतेसमर्पिता । स्वर्गादिफलहेतुःस्यान्नान्यथातंभजेद्धरिमितिशास्त्रार्थंजानंतःपुरुषाःनानादेवतापूजात्मकंइष्टापूर्तंवेदयंतेवेद
यंति । विष्णावंतेसमर्पयंति । एवमन्यत्परंब्रह्मवरिष्ठंअतिशयेनवरंसर्वयज्ञभोक्तृत्वादिसर्वप्रकारेणोत्तमंनवेदयंते । स्वार्थेणिच् ।
नजानंति । किंतुश्रेयःश्रेष्ठंराजवत्सर्वदेवोत्तमंवेदयंतेजानंति । तेविष्णावंतेसमर्पणादिपूर्वकंयजनादिकारिणः । सुकृते सुकृत
शब्दःपुण्यवाची । पुण्यश्रेयसीसुकृतंवृषइतिकोशात् । तेनांतेविष्णुसमर्पणसहितंपुण्यंगृह्यते । ततस्तत्साध्यंलक्ष्यते । तथाचांते

विष्णुसमर्पणसहितत्वकृतयजनादिपुण्यसाध्यइत्यर्थः । इदंचसांकल्पिकस्वर्गव्यावृत्त्यर्थंविशेषणं । नाकस्यपृष्ठेइंद्रलोके । तेपुण्य
मासाद्यसुरेंद्रलोकमितिसमाख्यानात् । भोगाननुभूत्वाअनुभूय । क्वापिछंदसीतिल्यबादेशाभावः । स्वर्गभोगानुभवक्षयानंतरमि
तिशेषः । इमंलोकंमर्त्यलोकमाविशंतीत्यन्वयः । एतच्चव्याख्यानंत्रैविद्यस्त्वपरोधर्मइत्याद्युदाहृतप्रमाणसिद्धं । तत्वनिर्णयटीका
यांतु श्रुतितात्पर्यापरिज्ञानप्राप्तंचेतिमूलंव्याख्यातुमियंश्रुतिरन्यथाव्याख्यातेतिनतद्विरोधः । एवंअन्यच्छ्रेयःपरंब्रह्मनवेदयंतेन
जानंति । किंतुप्रमूढाःप्रकर्षेणमिथ्याज्ञानिनः । ब्रह्मादिसाम्यंतद्धीनत्वंवाजानंतइतियावत् । वरिष्ठंसर्वोत्तमंब्रह्ममन्यमानाः ।
विभक्तिविपरिणामः । मन्यमानैःज्ञानिभिः । ऋत्विक्त्वेनस्वीकृतैःभागवताचार्यैरितियावत् । इष्टापूर्तंयज्ञादिकंवेदयंतेकारयंते ।
धातूनामनेकार्थत्वात् । तेमिथ्याज्ञानिनः । सुकृते भागवताचार्यसामर्थ्येनयज्ञादिपुण्यलभ्ये नाकस्यपृष्ठेइंद्रलोकेभोगाननुभूय ।
तत्क्षयानंतरंहीनतरंतमएवविशंति । इदंतुव्याख्यानं । येतुभागवताचार्यैःसम्यक्यज्ञादिकुर्वते । बहिर्मुखाःभगवतोनिवृत्ताश्चवि
कर्मणः । दक्षिणातर्पितानांतुआचार्याणांतुतेजसा । यांतिस्वर्गंपुनःक्षिप्रंतमोंधंप्राप्नुवंतिच । तदन्येनैवचस्वर्गंयांतिविष्णुबहिर्मु
खाइतिप्रमाणानुसारेणकृतमित्यवधेयं । ननूक्तस्वर्गहेतुर्यज्ञादिकर्मराजसमेव । यत्तुकामेप्सुनाकर्मतद्राजसमुदाहृतमिति । अभि
संधायतुफलंदंभार्थमपिचैवयत् । इज्यतेभरतश्रेष्ठतंयज्ञंविद्धिराजसमितिचतल्लक्षणाक्रांतत्वात् । राजसयागाच्चसांकल्पिकस्वर्गए
वभवति । यागात्तुराजसात्स्वर्गःसांकल्पिकउदाहृतइत्युक्तेः । तत्कथंराजसयागादिंद्रलोकाख्यस्वर्गप्राप्तिर्व्याख्यायतइति । उच्य
ते । फलकामनयाक्रियमाणोयागोराजसयागः । सद्विविधः । विष्णुश्रद्धापूर्वकंक्रियमाणःतांविनैवक्रियमाणश्चेति । तत्रमुक्ति

योग्यैरनित्यत्रैविद्यैःनित्यसंसारिभिर्नित्यत्रैविद्यैश्चक्रियमाणोराजसयागःविष्णुश्रद्धापूर्वकः । तेषांसर्वदेवोत्तमत्वप्रकारकविष्णुनि
श्चयसद्भावात् । अज्ञत्रैविद्यैःक्रियमाणस्तुनविष्णुश्रद्धापूर्वकः । तेषांसर्वथाविष्णुनिश्चयाभावात् । तत्रद्वितीयस्यैवसांकल्पिकस्व
र्गहेतुत्वं । विष्णावश्रद्धयाऽयोग्यकामाच्चैषांपुनर्भवेदितिविष्णुश्रद्धांविनाकृतराजसयागेनसांकल्पिकस्वर्गोभवतीत्युक्तत्वात् । अ
तोविष्णुश्रद्धापूर्वकराजसयागस्यइंद्रलोकाख्यस्वर्गहेतुत्वाभिधाने नकश्चिद्दोषः । मिथ्याज्ञानिकृतराजसयागस्यतुभागवताचार्य
प्रसादेनइंद्रलोकहेतुत्वमितिनकदाचिद्दोषइतिध्येयं ॥ १० ॥ एवंतान्याचरथनियतमित्यादिना परब्रह्मलोकप्राप्तिहेतुत्वादग्निहो
त्रादिगृहस्थधर्माःशमादियतिधर्माश्चकर्तव्याइतिविधायाग्निहोत्रादिगृहस्थकर्मणांब्रह्मलोकप्राप्तिहेतुत्वमतीतमंत्रैरुपपादितं । इदा
नींशमादियतिधर्माणांप्रागुक्तब्रह्मलोकप्राप्तिहेतुत्वंप्रपंचयति ॥ तपःश्रद्धेइति ॥ अयंचमंत्रोयतिपरएव नब्रह्मचारिपरः । तेषा
मरण्यवासाभावात् । अतएवनगृहस्थपरः । नवानप्रस्थपरः । तेषांभिक्षाटनाभावात् । तस्माद्यतिपरएवेति । किंचशमोदमस्त
पःशौचंक्षांतिरार्जवमेवच । ज्ञानंविज्ञानमास्तिक्यंब्राह्मंकर्मस्वभावजमितिगीतायांयानिस्वाभाविकब्राह्मकर्माणिउक्तानितान्येव
धर्माःपरमहंसानांब्राह्माःएवशमादिकाइतिस्मृतौ यतिधर्मत्वेनोच्यंते । एवंशमादयोत्रमंत्रेपठ्यंते । नतुयज्ञादयः । अतोयंमंत्रोय
तिपरएवेतिस्थितेव्याख्यायते । देवद्विजगुरुप्राज्ञपूजनंशौचमार्जवं ॥ ब्रह्मचर्यमहिंसाचशारीरंतपउच्यते ॥ अनुद्वेगकरंवाक्यंस
त्यंप्रियहितंचयत् ॥ स्वाध्यायाभ्यसनंचैववाङ्मयंतपउच्यते ॥ मनःप्रसादःसौम्यत्वंमौनमात्मविनिग्रहः ॥ भावसंशुद्धिरित्येत

उप० । तपःश्रद्धेयेह्युपवसंत्यरण्येशांताविद्वांसोभैक्षचर्यांचरंतः । सूर्यद्वारेणतेविरजाःप्रयांतियत्रामृतःसपुरुषोह्यव्ययात्मा ॥ ११ ॥

त्तपोमानसमुच्यते ॥ इतिगीतोक्तंत्रिविधंतपोत्रमंत्रेतपःशब्देनग्राह्यं । श्रद्धाशब्देनास्तिक्यनिष्ठोच्यते । शास्त्राचार्योपदिष्टेर्थे अननुभूतेप्येवमेवैतदितिविश्वासएवास्तिक्यनिष्ठा । श्रद्धानामास्तिक्यबुद्धिःसाचैवद्विविधामता । अत्रोक्तमस्तीत्येकातुममा त्रास्तिप्रयोजनमित्युक्तास्तिक्यबुद्धेरप्यत्रैवांतर्भावात् । ततश्चये यतयः । तपःश्रद्धे उक्तरूपे । उपवसंति अनुतिष्ठंति । अरण्येउप विशंति वासंकुर्वंति । शांताःभगवन्निष्ठत्वरूपशमोपेताः । विद्वांसःज्ञानविज्ञानयुक्ताः । भैक्षचर्यांअरण्याद्ग्रामंगत्वेत्युपस्कार्यं । भिक्षार्थंग्राममाविशेदितिस्मृतेः । ततश्चारण्याद्ग्रामंगत्वाभैक्षचर्यांभैक्षंभिक्षाकदंबकं । तदनुकूलचर्यांगृहेगृहेपर्यटनं । चर्यापर्यट नेप्रोक्तावर्गप्रस्थानयोरपीतिकोशात् । चरंतःकुर्वंतः । तेयतयः । सूर्यद्वारेण सूर्याख्योपायेन । द्वारंतुद्वार्युपायेस्यादितिकोशात् । विरजाःविगतपापाः । रजंतुरजसासहेतिद्विरूपकोशादकारांतोपिरजशब्दोऽस्ति । ततश्चसूर्यद्वारेणविरजाइत्यस्यार्चिरादिमार्गेण परब्रह्मलोकगमनकालेसूर्यंप्रविश्यविधूतसर्वपापाइतिपर्यवसितार्थः । तदुक्तं । सतेजसिसूर्येसंपन्नोयथापादोदरस्त्वचाविनिर्मुच्यते एवंहवैसपाप्मनाविनिर्मुक्तइति । यत्रदेशे । अमृतःनित्यमुक्तः स्वदर्शनेनमोक्षप्रदइतिवा । अव्ययात्मा । अव्ययःनाशरहितःआत्मा स्वरूपंदेहश्चयस्यसतथा । सपुरुषःपूर्णषड्गुणःशिंशुमाररूपोभगवानस्तितंप्रदेशंप्रयांति । तदनंतरंचतंनमस्कृत्ययत्रवैकुंठेअ मृतःपुरुषोअव्ययात्माअस्तितंपरब्रह्मलोकंप्रयांतीत्यर्थः । अत्रोक्तायतीनांशिंशुमारप्राप्तिःतत्प्रणामानंतरंपरब्रह्मलोकप्राप्तिश्चन केवलंयतीनामेव । किंतुसर्वज्ञानिनामपि । यथोक्तं । वैश्वानरेद्युनद्यांवादेहेवासूर्यमंडले । विधूयसर्वपापानियांतिकिंस्तुघ्नकेशवमि ति । अशेषजगदाधारःशिंशुमारोहरिःपरः । सर्वेब्रह्मविदोनत्वातंयांतिपरमंपदमितिचेतिध्येयं ॥ ११ ॥ तान्याचरथनियतंसत्यका



माइत्यादिभिः तपःश्रद्धेइत्यंतैःमंत्रैःयज्ञतपःश्रद्धादीनांपरब्रह्मलोकप्राप्तिसाधनत्वमुक्तं नचतद्युक्तं । यज्ञादिनाअंतःकरणशुद्धि मात्रोत्पत्तावपिश्रवणादिकंविनाब्रह्मापरोक्षज्ञानोत्पत्त्यभावेनपरब्रह्मलोकप्राप्त्ययोगात् । अतःश्रवणादिकंकर्तव्यमितिप्रतिपादयि तुंतत्साधनंवैराग्यंतत्साधनंचसारासारविवेकइत्याह ॥ परीक्ष्येति ॥ ब्राह्मणःब्रह्मज्ञानयोग्यःकर्मचितान्कर्मापादितान्विष्णुलो केतरलोकान् । परीक्ष्यअसारानित्यतयाविचार्यनिर्वेदंवैराग्यंआयात्प्रायात्प्राप्नुयात् । लकारव्यत्ययःछांदसः । एवंमोक्षादितरत्र निर्विण्णःसःमुमुक्षुःयस्मादकृतो नित्यपुरुषार्थोमोक्षः । कृतेनकर्मणानास्तिनभवति । किंतुज्ञानेनैव । तत्तस्माद्विज्ञानार्थंमोक्षजनकपर ब्रह्मज्ञानार्थं । समित्पाणिःसन् श्रोत्रियंवेदव्याख्याननिपुणं । ब्रह्मनिष्ठंविष्णुभक्त्यादिगुणसंपन्नंगुरुं । एवकारःश्रोत्रियत्वादिगुणसं पन्नएवगुरुःसंपाद्यइत्यवधारणार्थः । अभिगच्छेत्प्राप्नुयादित्यर्थः ॥ १२ ॥ अनेनवैराग्यंश्रवणसाधनमित्युक्तं । नकेवलमेताव त् । किंतुशमदमादिसंपत्तिरपीतिदर्शयन्श्रवणप्रकारमाह ॥ तस्माइति ॥ सःब्रह्मज्ञानार्थिनामुमुक्षुणाअभिगतः विद्वान् नकं चनवसतौप्रत्याचक्षीततद्व्रतं । विद्यार्थेवसतीच्छयाआगतंनेतिनब्रूयात्तदेतद्विदुषोव्रतमित्यादिश्रुतिस्मृत्युक्तार्थज्ञानी । सम्यगुपसन्ना यउपसत्तिमते । प्रशांतचित्तायप्रशांतंरागद्वेषरहितंचित्तंयस्यसतथोक्तः । तस्मैशमान्विताय । शमपदंशांतोदांतउपरतस्तितिक्षुरिति श्रुत्युक्तदमाद्युपलक्षकं । ततश्चशमादियुक्तायेत्यर्थः । तस्मैमुमुक्षवे । येनयया । अक्षरंनाशरहितं । पुरुषं पूर्णषड्गुणं । सत्यंभगवंतं । तत्व

उप० । परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेन । तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठं ॥ १२ ॥ तस्मैसविद्वानुपसन्नायसम्यक् प्रशांतचित्तायशमान्विताय । येनाक्षरंपुरुषंवेदसत्यंप्रोवाचतांतत्वतोब्रह्मविद्यां ॥ १३ ॥

तोवेदविद्यात् । तांब्रह्मविद्यांप्रोवाचप्रवदेत् । तद्विद्याव्याख्यानंकुर्यादित्यर्थः। अनेनमंत्रद्वयेननित्यानित्यवस्तुविवेकजन्यंवैराग्यं शमादिसंपत्तिर्मुमुक्षाचेत्येतत्त्रयंश्रवणादिरूपविचारांगमित्युक्तमितिध्येयं ॥ १३ ॥ इतिद्वितीयःखंडः ॥२॥ उक्तविशेषणविशिष्ट शिष्यंप्रतिब्रह्मविद्यांप्रवक्ष्यन्गुरुःभगवत्स्तुतिरूपंमंगलमादावाचरति ॥ तदेतत्सत्यमिति ॥ सत्यंभगवान् । नकेवलंततत्यत्तदद्रे श्यमित्याद्युक्तगुणविशिष्टं । किंतुएततत्वक्ष्यमाणलक्षणकंचेत्यर्थः । एवंगुरुःमंगलमनुष्ठायब्रह्मविद्यामुपदिशति॥यथासुदीप्तादि ति ॥ विष्फुलिंगाइतिविशिष्टाःअग्निकणाइत्यर्थः। त्रिषुस्फुलिंगोग्निकणइत्यमरोक्तेः । सुषामादिषुचेतिसूत्रेणविष्फुलिंगाइतिषत्वं बोध्यं । सरूपाइति । समानंरूपंयेषांतेतथोक्ताः । ज्योतिर्जनपदेत्यादिसूत्रेणसमानशब्दस्यसादेशइतिबोध्यं । पूर्वपूर्वस्फुलिंगस दृशाःउत्तरोत्तरस्फुलिंगाःयथाभवंतितथापूर्वकल्पीयपदार्थसदृशाएवोत्तरकल्पेषुपदार्थाभवंतीतिदर्शयितुंसरूपाइत्युपमानोपमेय योःविशेषणमुक्तं । उपसन्नंशिष्यंगुरुःसंबोधयति ॥ सोम्येति ॥ सोमइवसोम्यः शाखादिभ्योयइतिसूत्रेणइवार्थेयप्रत्ययः । तस्यसंबुद्धिःसोम्येतिकेचित् । सोमपानार्हेत्यर्थः । सोममर्हतियइतिसूत्रादिति । बहवःभावाःपदार्थाःप्रजायंतेतत्रैवअपियंतिप्रवि शंतिचेत्यन्वयः । प्रलयेतत्रैवलीयंतइतिपरमार्थः । प्रागक्षरात्संभवतीहविश्वमितिशौनकंप्रत्यंगिरसोक्तं । अत्रतुउपसन्नंशिष्यंप्रतिगु रुणाब्रह्मणोजगत्कारणत्वादिकमुच्यतइतिनपुनरुक्तिरितिध्येयं॥१॥ नन्वक्षरशब्दोक्तभगवतोदेहेंद्रियमनांसिसंतिनवा। आद्येश्रम चिंतादिदोषप्रसंगः । देहादिमतःकुलालादेःघटाद्युत्पादनेनश्रमादिदर्शनात् । नांत्यः । कर्तृत्वायोगात् । देहादिरहितस्यतदद



उप० । तदेतत्सत्यं । यथासुदीप्तात्पावकाद्विष्फुलिंगाःसहस्रशःप्रभवंतेसरूपाः । तथाक्षराद्विविधास्सोम्यभावाःप्रजायंतेतत्रचैवापियंति ॥ १ ॥

नात्। किंचभगवान्परिच्छिन्नश्चेद्यत्रास्तितत्रैवसृष्टिंकुर्यात्। नत्वन्यत्र। तथाचविविधाशेषपदार्थस्रष्टृत्वायोगः। किंचभगवानुत्प त्तिमान्भवितुमर्हति। कर्तृत्वात्। कुलालादिवत्। तथाचतदुत्पत्तेःप्राक्तस्यजगत्स्रष्टृत्वंतस्यैवाशेषपदार्थस्रष्टृत्वोपपत्तौकिमंतर्ग डुनाभगवतेत्यतआह॥ दिव्योह्यमूर्तइति॥ हिशब्दोहेतौ। यस्मात्पुरुषोभगवान्दिव्यज्ञानानंदात्मकदेहवान्तस्मादमूर्तः। मूर्ततेजोबन्नंतदात्मकंशरीरं। जडशरीरमितियावत्। तद्रहितइत्यर्थः। एवंतृतीयपादेहिशब्दोहेतौ। यस्मात्पुरुषःशुभ्रःशुभैर्ज्ञानानं दाद्यात्मकैर्ज्ञानकर्मेंद्रियैःरमतइतिशुभ्रः।डोन्यत्रापिदृश्यतइतिडप्रत्ययेटिलोपेपृषोदरादित्वाच्छुभ्रशब्दात्तलोपेरूपमेतत्। तस्माद प्राणःजडज्ञानकर्मेंद्रियरहितः। अमनाःजडमनोरहितइत्यर्थः। अनेनाद्यतृतीयपादद्वयेनज्ञानानंदाद्यात्मकदेहेंद्रियादिकमंगीकृत्य जडदेहादिकंनिराकृतं। तेनदेहादिसद्भावात्कर्तृत्वोपपत्तिः। जडदेहाभावान्नश्रमचिंतादिप्रसंगः। तस्यैवतद्व्याप्तत्वादित्युक्तंभव ति। किंचेत्याद्युक्तद्वितीयदोषनिरासायाह॥ सबाह्याभ्यंतरइति॥ सःभगवान्। बाह्यःबहिर्भवः आभ्यंतरःसर्वपदार्थाभ्यंतरेभवः अतःपरिच्छिन्नत्वाभावान्नतत्पक्षोक्तदोषइतिभावः।अनेनैव विविधाभावाःप्रजायंतइतियदशेषपदार्थस्रष्टृत्वमुक्तंतदप्युपपादितं। ब हिःस्थित्वाबाह्यार्थोत्पादकःदेहांतःस्थित्वासुखाद्यांतरपदार्थोत्पादकइति।तृतीयदोषनिरासायह्यजइत्युक्तं।हिशब्दोहेतौ। दिव्यइत्य नुवर्तनीयं। यस्माद्भगवान्दिव्यःआनंदाद्यात्मकदेहवान्तस्मादजःउत्पत्तिशून्यः। जडदेहादेरेवोत्पत्तिव्याप्तत्वात्। तथाचनोक्त तृतीयदोषइतिभावः। ननुजडदेहादिराहित्यमेवभगवतःकुतइत्याशंक्यजडप्रकृतिनियामकत्वान्नतस्यप्रकृतिकार्यदेहादिकं। तदु

उप०। दिव्योह्यमूर्तःपुरुषःसबाह्याभ्यंतरोह्यजः। अप्राणोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः॥ २॥

क्तं । नतस्यप्राकृतामूर्तिर्मांसमेदोस्थिसंभवेतीतिभावेनजडप्रकृत्यभिमानिलक्ष्मीनियामकत्वंदर्शयति ॥ ह्यक्षरात्परतःपरइति ॥ नन्वत्रतथाक्षरादित्यनेनेनयस्याक्षरस्यसर्वोत्पादकत्वमुक्तंतस्यैवाक्षरात्परतःपरत्वमुच्यतइतिवक्तव्यं । नचेदंयुक्तं । स्वस्यैवस्वापेक्षयापरतःपरत्वायोगादित्यतोव्याचष्टे ॥ अपरमिति ॥ अक्षरंत्रिविधं । अपरं परमं परतःपरंचेति । तत्राक्षरात्परतइतिमंत्रेअक्षरशब्देनपरमक्षरंग्राह्यं । नतुययातदक्षरमधिगम्यतइतिवत्परंब्रह्म । अपरंत्वक्षरंयासेतिव्याख्यानरूपप्रमाणविरोधात् । तादृशाक्षरात्परतःपरत्वंतुभगवतोयुज्यतएवेतिभावः । अत्रसृगालवासुदेवादिव्यावृत्त्यर्थंपरानंदइत्युक्तं । आनंदरूपव्यावृत्त्यर्थंवासुदेवइत्युक्तमितिध्येयं ॥ २ ॥ तथाक्षराद्विविधाःसोम्यभावाःप्रजायंतइत्यत्रसूक्ष्मस्थूलादिभेदेनबहुसृष्टयःप्रतिज्ञाताः विविधभावाःप्रजायंतइतिनानाविधपदार्थोत्पत्तेरुक्तत्वात् । तत्रतेभावाःकिंनामानःकेनचक्रमेणजायंतइतिशंकाद्वयंपरिहर्तुंप्रतिज्ञातांस्थूलसृष्टिंप्रपंचयति ॥ एतस्मादिति ॥ तेभावाःप्राणादिनामानः । पाठक्रमेणैवचोत्पद्यंतइतिभावः । अत्रप्राणादिशब्दैःमहदादितत्वानितदभिमानिनोब्रह्माद्याश्चविवक्षिताः । विश्वस्यधारिणीत्यनेनचपृथिव्यनंतरंब्रह्मांडंतदंतर्गतंचविश्वंक्रमेणजातमित्यवधेयं ॥ ३ ॥ एवंतत्वसृष्टिंविशदयित्वाप्रतिज्ञातांब्रह्मांडांतःअंगसृष्टिमपिविशदयति ॥ अग्निर्मूर्धेति ॥ अत्रभगवन्मूर्धाद्यंगानामग्न्यादिदेवतै

भा० । अपरंत्वक्षरंयासाप्रकृतिर्जडरूपिका । अक्षरंपरमंश्रीस्तुपरतःपरमक्षरं । वासुदेवःपरमानंदइतित्रिविधमक्षरमितिच ।

उप० । एतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिच । खंवायुर्ज्योतिरापःपृथिवीविश्वस्यधारिणी ॥ ३ ॥ अग्निर्मूर्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः । वायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मा ॥ ४ ॥



क्यमुच्यते । नचतद्युक्तं । मानांतरविरोधादित्यतोऽन्यथातन्मंत्रंव्याचष्टे ॥ विष्ण्वति ॥ उपनिषदंतरेद्यौर्मूर्धेतिपाठसद्भावात्तदनुसारेणद्युवादीनीत्युक्तं । द्युवादीत्युवङादेशःछांदसः । तन्वादीनामियङुवङौवेतिवार्तिकात् । द्यौरित्यादिपदानीत्यर्थः । विष्ण्वंगानांद्यौरित्यादिशब्दवाच्यत्वेनिमित्तमाह ॥ क्रीडादीति ॥ दिवुक्रीडाविजिगीषेत्यादिधातुव्याख्यानादितिभावः । स्वर्गादीनांतच्छब्दवाच्यत्वेनिमित्तमाह । तज्जत्वादितीतिटीकाकाराः । अन्येतुहिशब्दोहेतौ । नामानीत्यस्यावृत्तिः । द्युवादीनीति । द्यौःक्रीडापिगुणःतद्वादीनितद्वाचकानीत्यर्थः । ततश्चयस्मात्सर्वशोपिनामानिद्युवादीनिक्रीडादिवाचकानिविष्ण्वंगानिचक्रीडादिरूपाणि । अतःक्रीडादिशक्तिरूपत्वात्नामानिअग्न्यादिसर्वनामानिविष्ण्वंगानांमूर्धादीनांनामानिवाचकानीतिभाष्यंयोजयंति । ततश्चायंमंत्रार्थः । अस्य अक्षराख्यस्यभगवतः । मूर्धाअग्निः । अंगंस्वतोगंतुमसमर्थंजगन्नयतीतिअग्निशब्दवाच्यः अग्न्याख्यदेवताजनकश्च । एवमस्य चक्षुषीचंद्रसूर्यौ । आह्लादकारित्वात्सूरिप्राप्यत्वाच्चचंद्रसूर्यनामके तज्जनकेच । नचात्रमुखादिंद्रश्चाग्निश्च । दंष्ट्रार्यमेंद्रू चंद्रमामनसोजातइत्यादिविरोधः । तत्राग्निचंद्रसूर्याणांभगवदंगांतरजातत्वोक्तेरिति वाच्यं । एकेनरूपेणमूर्धादिजन्यत्वं । रूपांतरेणमुखादिजन्यत्वमित्यंगीकारात् । यथोक्तंद्वितीयस्कंधतात्पर्ये । बहुरूपत्वात्दंष्ट्रार्यमेंद्रइत्यादीति । बह्वंगत्वंबहुत्वतइतिच । एवंअस्यश्रोत्रेअतिदेशननिमित्तेनदिङ्नामके मित्रधर्मवरुणवित्तपरूपदिग्देवताजनकेच । एवंअस्यवाक्वागिंद्रियंवेदाःवेदननिमित्तेनवेदनामिका वेदोच्चारणहेतुःवेदाभिमानिदेवताजनिकाच । विवृ

भाष्यं । विष्ण्वंगानांहिनामानिद्युवादीनितुसर्वशः । क्रीडादिशक्तिरूपत्वात्तज्जत्वादन्यवस्तुष्वितिच ।

ताइतितुवेदविशेषणं । विशेषैःषडंगेतिहासपुराणादिभिःवृताःयुक्ताइतितदर्थः । अस्यवायुःश्वासवायुःप्राणःप्रकृष्टचेष्टकत्वा त्प्राणनामकः मुख्यप्राणजनकश्च । नचैवमानीदवातमितिश्रुतिविरोधः । तत्रवातमितिश्वासाभावोक्तेरितिवाच्यं । तत्वो द्योतटीकायांअवातंवातप्रेरणाशून्यमितिव्याख्यानात् । नचैवंतमोवाय्वादीनांसर्वात्मनानिवृत्तिरितितत्वप्रकाशिकाविरोधइ तिवाच्यं । तत्रापिवायुपदस्यवायुप्रेरणार्थकत्वात् । अतएवश्वसितंमातरिश्वेत्यादौतत्रविष्णोरपिश्वासवायुरुक्तः । सचचिदा नंदात्मकएव तादृशमूर्धाद्यंगसहपाठादिति । अस्यहृदयंविश्व । व्याप्तत्वाद्विश्वनामकं विश्वाख्यदेवताजनकंच । अत्रविश्वो रुद्रः । तपोभिमानीरुद्रस्तुविष्णोर्हृदयमाश्रितइतिरुद्रस्यहृदयाश्रितत्वलिंगात् । योयदंगजन्यःसःतदाश्रितइतिनियमादिति बोध्यं । अस्यपद्भ्यांपृथिवी । पंचाशत्कोटिविस्तीर्णाभूः । तद्देवताचजातेतिशेषः । सृष्टिःस्थितिस्संहृतिश्चनियमोऽज्ञानबोधने । बंधोमोक्षःसुखंदुःखमावृतिर्ज्योतिरेवच । विष्णुनास्यसमस्तस्यसमासव्यासयोगतइतियत्सृष्ट्यादिज्योतिरंतद्वादशकर्तृत्वमुक्तंतत्र संक्षेपविस्तराभ्यांभगवतःसृष्टिकर्तृत्वमुक्तं । इदानींनियमनकर्तृत्वमप्याह ॥ ह्येषइति ॥ एषभगवान्सर्वभूतांतरात्मा सर्वप्राणि नामंतर्यामीच । इदंचप्रमाणसिद्धमितिहिशब्दः । यद्यपिसृष्टिप्रपंचनंसमाप्यनियमनकर्तृत्वंवक्तव्यं । प्रकरणशुद्धिसंभावात् । त थाप्येवंविधसृष्टिकर्तृत्वमसंभावितमितिशंकापरिहारायविलंबमसहमानेनगुरुणात्रैवोक्तमित्यवधेयं ॥ ४ ॥ एवं तथाक्षरादित्यु क्ताभगवत्कर्तृकासृष्टिः मंत्रद्वयेन तत्वसृष्ट्युक्त्याअंगसृष्ट्युक्त्याचप्रपंचिता । इदानींपुनरपितामेवसृष्टिंप्रपंचयितुंपृथिव्यांभगवज्ज

उप० । तस्मादग्निस्समिधोऽ (द्यौय)श्चसूर्यःसोमात्पर्जन्यओषधयःपृथिव्यां । पुमान्रेतस्सिंचतियोषितायांबह्वीःप्रजाःपुरुषात्संप्रसूताः ॥ ५ ॥

न्ययज्ञादिसृष्टिंसर्गादिकालीनांसूक्ष्मसृष्टिंचाह ॥ तस्मादग्निरिति ॥ तस्मात्भगवतएव । पृथिव्यां । अयःशुभजनकंदैवं । अ
यःशुभावहोविधिरितिकोशात् । ततश्चयज्ञादिधर्मइतिपर्यवस्यति । अग्निःसूर्यःसोमःपर्जन्यश्चेत्यादयोयज्ञदेवताः । समिधोयज्ञां
गानीध्मानि । इध्ममेधःसमित्स्त्रियामितिकोशात् । ओषधयःव्रीह्यादियज्ञांगद्रव्याणिच । अजायंतेतियोज्यं । अत्रसोमादितिपं
चम्याभगवत्कर्तृकपर्जन्यादिसृष्टौसोमोवृष्ट्यादौमधुररसपुष्टिकर्तृत्वेननिमित्तमात्रमितिसूचयति।एवंयज्ञतदंगद्रव्यादिसृष्टिमुक्त्वा
सूक्ष्मसृष्टिमप्याह ॥ पुमानिति ॥ नन्वत्रप्रसिद्धस्त्रीपुंप्रसंगेनाखिलप्रपंचोत्पत्तिरुच्यते । तच्चप्रत्यक्षादिबाधितमित्यतःप्रमाणेनै
वव्याचष्टे ॥ वासुदेवइति ॥ ततश्चायंमंत्रार्थः । पुमान्पूर्णत्वेनपुंनामकोवासुदेवः । योषितायां । टापंचापिहलंतानामितिवच
नाद्योषितायामितियुक्तं । स्वयोषितिरमायांरेतःसिंचति । गर्भमदधात् । तदनंतरंपुरुषात्पूर्णषड्गुणात्बह्वीःबह्व्यःप्रजाःविरिंचा
द्याःसंप्रसूताः । अत्रविरिंचादिसर्वदेवतानांसत्वादिसूक्ष्मोपादानकदेहयोगलक्षणमुत्पन्नत्वमेवसंप्रसूताइत्यनेनोच्यते । वासुदेवक
र्तृकसृष्टिप्रसंगादितिबोध्यं ॥ ५ ॥ एवंतत्वसृष्टिकथनेनांगसृष्टिकथनेनसूक्ष्मसृष्टिकथनेनच तथाक्षरात्पुरुषात्सोम्यभावाःप्रजायंत
इतिवाक्योक्तासृष्टिःप्रपंचिता । इदानींप्रकारांतरेणापितांप्रपंचयति ॥ तस्मादिति ॥ पुरुषादित्यर्थः । पूर्ववाग्विवृताश्चवेदाइ

उप० । तस्मादग्निस्समिधोऽय(द्वोय)श्चसूर्यःसोमात्पर्जन्यओषधयःपृथिव्यां । पुमान्रेतस्सिंचतियोषितायांबह्वीःप्रजाःपुरुषात्संप्रसूताः ॥ ५ ॥
भा० । वासुदेवःपुमान्नामापूर्णत्वात्सस्वयोषिति । रमायांगर्भमदधात्प्रजास्तस्मात्प्रजज्ञिरइतिच ।
उप० । तस्मादृचस्सामयजूंषिदीक्षायज्ञाश्चसर्वेक्रतवोदक्षिणाश्च । संवत्सरश्चयजमानश्चलोकाःसोमोयत्रपवतेयत्रसूर्यः ॥ ६ ॥

त्यविभक्तानांवेदानामीश्वरादभिव्यक्तिरुक्ता । इदानींविभक्तानांसृष्टिरुच्यतइतिनपुनरुक्तिः । अत्रऋगादीनांत्रयाणांग्रहणंत्रेतायुगाभिप्रायेण । त्रेतायांसत्रिधाभवदित्युक्तेरितिध्येयं । ऋचइत्यादौसंप्रसूतपदंयथायोगंलिंगवचनव्यत्ययेनानुषंजनीयं । ऋगादीनांप्रसूतत्वंनामाभिव्यक्तिः । दीक्षादीनांतूत्पत्तिरितिविवेकः । यज्ञाःअग्निहोत्रादयः । सर्वेक्रतवःसोमयागाः । पशुबंधाश्च । यद्यपियज्ञक्रतुशब्दौपर्यायौ यज्ञःसवोध्वरोयागःसप्ततंतुर्मखःक्रतुरित्यमरोक्तेः । तथापि सएषयज्ञःपंचविधोग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यानिपशुःसोमःइत्यैतरेयोपनिषदुक्तानांपंचविधयज्ञानांमध्येअग्निहोत्रादयोयज्ञशब्देनगृहीताः।पशुयज्ञादिव्यक्तयस्तुक्रतवइत्यनेन । अन्यथापौनरुक्त्यप्रसंगादितिबोध्यं । यद्वाक्रीयतेसोमोअत्रेतिक्रतुः क्रीणातेःडतुच् । एवंचक्रतुशब्दःससोमकयागेवर्ततइतिअमरटीकानुसारेणसोमयागाःक्रतवः । तदन्येयज्ञाइत्यपौनरुक्त्यं । वस्तुतस्तुक्रतवोग्निष्टोमाद्याः । यज्ञाःदेवानुद्दिश्यद्रव्यत्यागाः । उद्दिश्यदेवान्द्रव्याणांत्यागोयज्ञइतीर्यतइत्यभिधानात् । सामान्यविशेषभावेनभेदइतिगीताभाष्यटीकानुसारेणेतियोज्यं । अत्रऋगादिशब्दैस्तदभिमानिनोदेवाअपिग्राह्याः । यजमानःयज्ञक्रतूनामनुष्ठाता । यत्रसोमोस्ति यत्रपवते वायुरितिशेषः । यत्रलोकेसूर्योस्ति । तेलोकाःसंप्रसूताइतियोज्यं । एतच्चोपलक्षणं । अर्चिरादिमार्गेणब्रह्मलोकंगच्छतांमार्गमध्येगम्याःसूर्यचंद्रवायुलोकादयःसर्वेपिग्राह्याइतिज्ञेयं ॥ ६ ॥ उक्तंसर्वमर्थंसंक्षिप्याह ॥ **तस्माच्चेति** ॥ बहुधासूक्ष्मदेहयोगेनस्थूलदेहयोगेनअंगजन्यदेहयोगेनेत्यादिबहुप्रकारेणदेवाःतस्माच्चपुरुषादेवसंप्रसूताइत्यन्वयः।साध्या स्तन्नामकगणदेवताः । वयांसिपक्षिणः । ॥ ३१ ॥

उप० । तस्माच्चदेवाबहुधासंप्रसूताःसाध्यामनुष्याःपशवोवयांसि । प्राणापानौव्रीहियवौतपश्चश्रद्धासत्यंब्रह्मचर्यंविधिश्च ॥ ७ ॥

वयःपक्षिणिबाल्यादावित्यभिधानात् ॥ **प्राणापानाविति** ॥ उपलक्षणमेतत् । पंचप्राणाइत्यर्थः । व्रीहियवावित्युपलक्षणं । सर्वौषधयइत्यर्थः ॥ **तपइति** ॥ कायिकवाचिकमानसिकभेदेनत्रिविधंभगवद्गीतोक्तंतपः कृच्छ्रचांद्रायणादिकंचेत्यर्थः । श्रद्धा आस्तिक्यबुद्धिः । सत्यं यथार्थवचनं । ब्रह्मचर्यं स्मरणंकीर्तनंकेलिःप्रेक्षणंगुह्यभाषणं ॥ संकल्पोध्यवसायश्चक्रियानिर्वृतिरेवच ॥ एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः ॥ विपरीतंब्रह्मचर्यमेतदेवाष्टलक्षणमितिस्मृत्याब्रह्मचर्यस्वरूपंबोध्यं । विधिःविधानं । विधिर्विधानेदैवेचेतिकोशात् । अत्रसर्वत्रसंप्रसूतपदंयथायोगंलिंगवचनव्यत्ययेनानुषंजनीयं ॥ ७ ॥ प्रतिशरीरमिंद्रियादिसृष्टिरपि । पुरुषादेवभवतीत्याह ॥ **सप्तप्राणाइति** ॥ अत्रार्चिर्हेतिःशिखास्त्रियामितिकोशानुसारेणअर्चिषोज्वालाइतिनार्थः । प्रमाणविरोधादितिभावेनार्चिःपदमनूद्यव्याचष्टे ॥ **सप्तार्चिषोवृत्तयइति** ॥ इंद्रियजन्यज्ञानानीत्यर्थः । प्रकृतसंगततयाहोमाइत्येतदनूद्यव्याचष्टे ॥ **होमाःसंबंधाइति** ॥ विषयेंद्रियसंबंधाइत्यर्थः । प्रसिद्धार्थत्वप्रतीतिनिरासायलोकाइत्येतदनूद्यव्याचष्टे ॥ **लोकागोलकाइति** ॥ इंद्रियगोलकाइत्यर्थः । गुहाहृदयमाशयआश्रयोयस्यासौतथाभूतमितिकृतेहृदयाश्रितत्वंप्रतीयते । तदनुकूलंविशेष्यमाह ॥ **गुहाशयायांबुद्धाविति** ॥ ननुद्वितीयांतस्यविशेषणस्यसप्तम्यंतंविशेष्यंकथमुक्तं । गुहाशयायामितिचकथमुक्तमित्यतआह ॥ **लोपःसमानइति** ॥ पूर्वशब्दस्यतत्समानेशब्देपरेलोपोभवतीतिसूत्रार्थः॥

उप० । सप्तप्राणाःप्रभवंतितस्मात्सप्तार्चिषःसमिधःसप्तहोमाः । सप्तइमेलोकायेषुचरंतिप्राणागुहाशयांनिहितास्सप्तसप्त ॥ ८ ॥

भा० । सप्तार्चिषोवृत्तयः । होमास्संबंधाः । लोकागोलकाः । गुहाश(या)यांबुद्धौ । लोपस्समानइतिसूत्रादेकयकारलोपः । प्रतिपुरुषंसप्तसप्त ।

एकयकारलोपइति ॥ आकारसहितपूर्वयकारलोपइत्यर्थः । तथाचगुहाशयामितिनद्वितीयांतं । किंतुगुहाशयायामितिस
प्तम्यंतमेव । तत्रयाशब्दलोपेनगुहाशयामितिप्रयुज्यते । अतोनोक्तदोषइतिभावः । सप्तसप्तेत्यनयोर्विशेषणविशेष्यभावेकृते
इंद्रियाणांसंख्याधिक्यंप्रतीयते । तच्चसप्तप्राणाइत्यनेनविरुद्धमित्यतआह ॥ प्रतिपुरुषंसप्तसप्तेति ॥ सप्तसप्तेतिवीप्सा
यांद्विर्वचनं । प्रतिपुरुषमितिचाध्याहार्यमितिभावः ॥ ततश्चायंमंत्रार्थः ॥ तस्मात्पुरुषात्सप्तप्राणाःज्ञानेंद्रियाणि
श्रोत्रस्पर्शनचक्षूरसनघ्राणमनोबुद्धिरूपाणिप्रभवंतिउत्पद्यंते । अर्चिषोज्ञानेंद्रियवृत्तयः समिधोविषयाः होमाःविषयेंद्रिय
संबंधाः गुहाशयांगुहाशयायां स्वरूपज्ञानव्यावृत्त्यर्थंविशेषणं बुद्धौ । यथासीम्निपुष्कलकोहतइत्यत्रनिमित्तात्कर्मयोगेपीति
वार्तिकेनफलेसप्तमी । निमित्तंफलमितिव्याख्यानात् । तथात्रापिबुद्धावितिनिमित्तसप्तमी । प्राणाःनिहिताइतिकर्मका
रकयोगसद्भावात् । इयमेवचतादर्थ्यसप्तमीत्यन्यत्रोक्तं । तथाचवृत्तिरूपबुद्ध्यर्थंप्रतिशरीरंसप्तसप्तनिहिताःप्राणाःयेषुगोलके
षुचरंतितइमेलोकाश्चतस्मात्प्रभवंतीत्यन्वयः ॥ ८ ॥ तस्मादग्निःसमिधइतिप्रागुक्तांसृष्टिंप्रपंचयितुंपृथिव्यांसमुद्रादिसृष्टिरपि
पुरुषादेवभवतीत्याह ॥अतइति ॥ सर्वेसमुद्राःगिरयश्च अतःपुरुषात्प्रभवंतीत्यनुषंजनीयं । सर्वरूपाःनानादिगभिमुखाः। सिंधवो
नद्यः । सिंधुःसमुद्रेनद्यांचेतिकोशात् । अस्मात्स्यंदंते । स्यंदूप्रस्रवणेस्रवंतीत्यर्थः । सर्वाःओषधयः फलपाकांताःव्रीह्यादयः।
रसाश्चमधुरादयः श्रृंगारादयश्च । अतश्च पुरुषादेवप्रभवंतीतियोज्यं । ननुभगवानेवचेतनाचेतनानांसर्वेषामपिस्रष्टेतिअतीतमं

उप० । अतस्समुद्रागिरयश्चसर्वेअस्मात्स्यंदंतेसिंधवस्सर्वरूपाः । अतश्चसर्वाओषधयोरसाश्चयेनैषभूतैस्तिष्ठतेह्यंतरात्मा ॥ ९ ॥

त्रैरभिहितं । तत्कथं । विरिंचादीनांकेषांचिदेवभगवानुत्पादकः । अन्येषांतुविरिंचाद्याएवोत्पादकाइत्यन्यत्रोक्तत्वादित्यतआह ॥ येनेति ॥ येनकारणेनएषभगवानंतरात्माअंतर्यामीसन्भूतैःव्यत्ययेनसप्तम्यर्थेतृतीया । विरिंचादिसर्वभूतेषु । तिष्ठतेति ष्ठति । तेनकारणेनविरिंचादिसृष्टानामपितदंतर्यामिभगवतैवसृष्टत्वात्पुरुषादेवप्रभवंतीतियत्तत्रप्रागुक्तंतत्सर्वमुपपन्नमितिभावः ॥ ९ ॥ ननु तथाक्षरात्संभवतीहविश्वमित्यादिनातत्रतत्रभगवतःसृष्टिकर्तृत्वमुक्तं । तेनसर्जनक्रियायाःभगवद्भिन्नत्वंप्राप्तं । क्रियातत्कर्त्रोर्भेदस्यैवलोकेदृष्टत्वात् । एवं तपसाचीयतइतिसंबंधोक्त्याज्ञानस्यब्रह्मभिन्नत्वंप्राप्तं । तपःशब्देनज्ञानग्रहणात् । संबंधस्यचभेदव्याप्तत्वात् । नचतद्युक्तं । ब्रह्मक्रियाज्ञानयोर्ब्रह्मात्यंताभिन्नत्वादित्यतआह ॥ पुरुषएवेति ॥ अत्रविश्वंकर्मपु रुषएवेतिसर्वकर्मणःपुरुषैक्यमुच्यते । एवंविश्वंतपःपुरुषएवेतिसर्वंतपसस्तदैक्यमुच्यते । तदुभयमयुक्तं । देवदत्तादिनिष्ठकर्म तपसांब्रह्मैक्याभावादित्यतःसंबंधिप्रदर्शनपूर्वकंकर्मपदंतावदनूद्यव्याचष्टे ॥ भगवतइति ॥ एवंतपःकृच्छ्रादिकर्मचेत्यभिधानो क्तंतपोब्रह्मणिप्रमाणबाधितं । तत्कथंतस्यतदैक्यमुच्यतइत्यतःतपःपदमनूद्यव्याचष्टे ॥ तपोज्ञानंचेति ॥ ननुकर्मतपश्चपुरुष एवेत्युक्तमयुक्तं । प्रसिद्धपुरुषतादात्म्याभावादित्यतःपुरुषंविशिनष्टि ॥ परामृतब्रह्माख्यःपुरुषइति ॥ अनेनपरामृतंनित्यमु क्तंयद्ब्रह्मसपुरुषइतियोजनासूचिता । परामृतब्रह्माख्यइतितुफलितार्थकथनमितिज्ञातव्यं । एवंविशेषणविशेष्यभावान्वयेसति

उप० । पुरुषएवेदंविश्वंकर्मतपोब्रह्मपरामृतं । एतद्योवेदनिहितंगुहायांसोविद्याग्रंथिंविकिरतिहसोम्य ॥ १० ॥ खं० ३ ॥
भा० । भगवतःकर्मचेष्टातपोज्ञानंच । परामृताख्यःपुरुषोभगवानेव ।

पर्यवसितमर्थमाह ॥ भगवानेवेति ॥ भगवत्क्रियाज्ञानयोस्तदैक्येश्रुतिस्मृतीपठति ॥ यैषेति ॥ स्वाभाविकीतिच ॥ ननु क्रियायाःसादिविनाशित्वात्कथंब्रह्मैक्यमितिचेत् । उच्यते । नात्रक्रियापरिस्पंदःकिंतुकार्यानुकूलशक्तिरेव । एतच्चलिंगपादसुधायांस्पष्टं । तथाचशक्तेरनादिनित्यत्वान्नकश्चिद्दोषइति ॥ येचधर्माबलादयइति ॥ तथाचमंत्रेकर्मतपःशब्दाभ्यांसर्वेपिभगवद्धर्माउपलक्षणीयाइतिभावः ॥ ततश्चायंमंत्रार्थः ॥ विश्वं सर्वंभगवतःकर्मसर्जनादिक्रियाचेष्टा । तपोज्ञानंच । परामृतंनित्यमुक्तं ब्रह्म । परामृतब्रह्माख्यंइतियावत् । पुरुषोभगवानेव । भगवत्क्रियादिकंसर्वभगवदत्यंताभिन्नमितियावत् । उक्तार्थेतात्पर्यद्योतनायएतद्वेतुःफलमाह ॥ एतद्योवेदेति ॥ हेसोम्य गुहायांहृदयगुहायां । निहितंएतत्सृष्ट्यादिक्रिययाज्ञानादिगुणेनचअत्यंताभिन्नंसर्वकर्तृत्वादिलक्षणंचब्रह्मवेद गुरुमुखाच्छृणोति । सःअविद्याग्रंथिं भावरूपाज्ञानबंधं । विकिरति । कृविक्षेपे । विक्षिपतिशिथिलीकरोतीतियावत् । तदुक्तं । ज्ञानेनचतदज्ञानमित्यत्रप्रथमज्ञानंपरोक्षमितिगीताभाष्यव्याख्यानावसरेप्रमेयदीपिकायांपरोक्षज्ञानमविद्यांशिथिलयतीति । श्रुत्वामत्वातथाध्यात्वेतिसूत्रभाष्यव्याख्यानावसरेतत्वप्रकाशिकायांच श्रुत्वातदज्ञानंपराणुद्येति । शृणुयाद्यावदज्ञानमित्याद्यागमेचायमेवार्थोवगम्यते । अत्रप्रमेयदीपिकादावविद्यांशिथिलयतीतियदविद्याशिथिलीकरणमुक्तं यच्चपराणुद्येत्युक्तं तदविद्याग्रंथेःशिथिलीकरणाभिप्रायेण । तेनात्राविद्याग्रंथिमितिपदंसार्थकमितिबोध्यं । अत्रोपनिषदियद्गुहानिहितमित्यादिनांतर्यामिभगवदुपासनंतत्रतत्रोक्तं तत् अंतरुपासकाभिप्रायेण । अन्येषांतुसर्वे ॥ ३३ ॥

भा० । यैषाचेष्टाभगवतोयच्चज्ञानंपरात्मनः । तत्सर्वंभगवानेवयेचधर्माबलादयइतिच । स्वाभाविकीज्ञानबलक्रियाचेतिश्रुतिः ।

षां अंतर्यामिभगवज्ज्ञानमावश्यकंकिंचिदुपासनंच । यथोक्तं । येषांबहिरुपासनेन मोक्षस्तेषामपिह्युपासनंकिंचित्कार्यमेवेति । एवंसर्वत्रापिभगवन्महिमोक्तिस्तदुपासनयोग्यानांतदुपासार्थं । अन्येषांतुतज्ज्ञानार्थं । यथोक्तं । ज्ञानार्थमथध्यानार्थंगुणानांसमुदीरणेति ॥ १० ॥ इतितृतीयःखंडः ॥ ३ ॥ नन्वस्तुब्रह्मजगज्जन्मादिकारणमिति । अस्तुचजगत्स्रष्टृत्वादिविशिष्टब्रह्मज्ञानमविद्याग्रंथिंविकिरतीति । तथापिब्रह्मज्ञानार्थितां(ज्ञानार्थत्वां)प्राप्तैरस्माभिःकिंकर्तव्यमितिशिष्यैःपृष्टेनगुरुणाब्रह्मज्ञानार्थंयुष्माभिस्तच्छ्रवणादिकंकर्तव्यमित्युपदेष्टुंउत्तरोमंत्रसंदर्भउक्तः । तत्रतावदविद्याशिथिलीभावफलकत्वाद्गुणविशेषविशिष्टब्रह्मश्रवणंकर्तव्यमितिगुरुःशिष्यान्प्रत्याह ॥ आविरित्यादिनामंत्रद्वयेन ॥ यद्गुहाचरं हृदयगतंब्रह्म । आविः नित्याभिव्यक्तस्वरूपं। सन्निहितं सर्वजीवानांसमीपवर्ति। महत् उत्तमं । पदं पद्यतेप्राप्यतएतदितिपदं। सुषुप्तप्राप्यंमुक्तप्राप्यंवा। एतत्सर्वंप्रमाणसिद्धमितिदर्शयितुंनामेत्युक्तं । अत्र एवंभूतगुणके तस्मिन्नंतर्यामिणि। एजत्एजृकंपने सकलकर्मेंद्रियव्यापारवत्। प्राणत् श्वासादिव्यापारवत् । निमिषत् अक्षिपक्ष्मव्यापारवत्। उपलक्षणमेतत्। सर्वज्ञानेंद्रियव्यापारवत्। जागरादिसर्वव्यापाराणामंतर्याम्यधीनत्वंज्ञापयितुंत्रिविधोक्तिः। एवंभूतयंजीवजातं। एतत्सर्व मर्पितमाश्रितं। यच्चसदसद्वरेण्यंसदसद्भ्यांमूर्तामूर्ताभ्यांकार्यकारणाभ्यांवा वरेण्यंश्रेष्ठं । यच्चविज्ञानात्परं । यच्चप्रजानांवरिष्ठंअतिशयेनसर्वप्रजोत्तमं । यच्चार्चिमत्कांतिमत् । यच्चाणुभ्योप्यति

उप० । आविःसंनिहितंगुहाचरंनाममहत्पदं । अत्रैतत्सर्वमर्पितमेजत्प्राणन्निमिषच्चयात् ॥ १ ॥ एतज्जानथसदसद्वरेण्यंपरंविज्ञानाद्यवरिष्ठंप्रजानां । यदर्चिमद्यदणुभ्योणुचयस्मिँल्लोकानिहितालोकिनश्च ॥ २ ॥

शयेनाणुभूतं । यस्मिंश्चलोकाःपृथिव्यादयःलोकिनःलोकपालाश्चनिहिताःस्थिताः । एततूएवंभूतगुणकंअंतर्यामिरूपंजानथ । छांदसोयंप्रयोगः ।जानीतश्शृणुतेतिमंत्रद्वयार्थः।नन्वत्रपरमित्येततूवरिष्ठमित्यनेनगतार्थं । किंचविज्ञानादित्येतत्प्रजानांवरिष्ठमित्यत्रनहेतुः। प्राकृतपुरुषेविज्ञानसद्भावेपिसर्वप्रजोत्तमत्वाभावादित्यतोविज्ञानशब्दार्थंवदन्नन्वयमपिदर्शयति ॥ **विज्ञानाद्ब्रह्मणः परमिति** ॥ तथाचसर्वप्रजोत्तमत्वंकैमुत्येनसाधयितुंविरिंचोत्तमत्वमुच्यतइतिभावः । ब्रह्मणोविज्ञानशब्दवाच्यत्वेविष्णोस्तदुत्तमत्वेचप्रमाणमाह ॥ **नाभीति** ॥ विज्ञानशक्तिःअहं अंभसिसतः विद्यमानस्यजलशायिनः अनंतशक्तेः यस्यपुंसोभगवतः नाभिह्रदादासंउत्पन्नः । यस्येत्यस्यभगवतइतिप्रकृतेनान्वयः । चतुर्मुखवाक्यमिदं । अत्रचतुर्मुखेनस्वस्यविज्ञानशक्तित्वमुच्यते । तेनविज्ञानाद्ब्रह्मणइतिव्याख्यानमुपपन्नं । यस्यनाभिनाह्रदादहमासमितिपरब्रह्मजातत्वंविरिंचस्योच्यतेतेन ब्रह्मणः परमितिव्याख्यानंचोपपद्यतइतिध्येयं ॥ १–२ ॥ एवंश्रवणंकर्तव्यमित्युक्त्वासंशयविपर्ययनिरासफलकत्वान्मननमपिकर्तव्यमितिविधत्ते ॥ **तदेतदितिमंत्रेण** ॥ तत्रप्रसिद्धप्राणाद्यैक्यमुच्यतइत्यन्यथाप्रतीतिनिरासायप्राणादिशब्दान्निर्वक्ति ॥ **प्राणः प्रणयनादिति** ॥ एतच्चप्राणादिशब्दवाच्यत्वंमुख्यप्राणाद्यंतर्यामिरूपेणैवेतिभावेनाह ॥ **सर्वजीवेति** ॥ **ततश्चायंमंत्रार्थः**॥

---

भा० । विज्ञानाद्ब्रह्मणःपरं । नाभिह्रदादिहसतोंभसियस्यपुंसोविज्ञानशक्तिरहमासमनंतशक्तेरितिभागवते ।

उप० । तदेतदक्षरंब्रह्मसप्राणस्तदुवाङ्मनः । तदेतत्सत्यंतदमृतंतद्वेद्धव्यंसोम्यविद्धि ॥ ३ ॥

भा० । प्राणःप्रणयनाद्विष्णुर्वक्तृत्वाद्वागुदीरितः । मनोमंतृत्वतोविष्णुःसर्वजीवनियामकइतिशब्दनिर्णये ।

तत्अदृश्यत्वादिगुणकं । एततत्यथासुदीप्तादित्यादिमंत्रोक्तस्रष्टृत्वादिगुणकं । अक्षरंभगवान् । ब्रह्मसकलगुणपूर्णं । अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणाइतिश्रुतेः । एवंसअक्षराख्योभगवान्प्राणः सकलप्राणिप्रेरणान्मुख्यप्राणांतर्यामिरूपेणप्राणशब्दवाच्यः । तदु उशब्दोऽवधारणार्थे । अक्षरमेव । वक्तृत्वाद्वागभिमानिदेवतांतर्यामिरूपेणवाक्शब्दवाच्यं । तदेवमंतृत्वान्मनोभिमानिदेवतांतर्यामित्वेनमनःशब्दवाच्यंच । तदेतदक्षरमेवसत्यं मुक्तामुक्तनियामकं । तस्यहवाएतस्यब्रह्मणोनामसत्यमिति । तानिहवाएतानित्रीण्यक्षराणिसत्तियमिति तद्यत्सत्तदमृतं । अथयत्तितन्मर्त्यं । अथयद्यंतेनोभेयच्छतीतिश्रुतेः । तदक्षरंअमृतंनित्यमुक्तं । हेसोम्यत्वंतदुक्तगुणविशिष्टमक्षरं । विद्धिजानीहि । तन्मननंकुर्वितियावत् । अत्रार्थेवेद्धव्यमितिलुप्तोपमा । यथाधनुर्धरःशरेणवेद्धव्यंलक्षंचित्तैकाग्र्येणविध्यतितथेतियोज्यं ॥ ३ ॥ एवंमननंकर्तव्यमित्युक्त्वातदनंतरंभगवद्ध्यानंकर्तव्यमित्याह ॥ धनुरिति ॥ हेसोम्यत्वंऔपनिषदंब्रह्मविद्ययाव्याख्येयं । शेषे इतिसूत्रेणोपनिषच्छब्दाद्व्याख्येयमित्यर्थेअण्प्रत्ययः । सर्ववेदानांप्रणवव्याख्यानरूपत्वंचान्यत्रस्पष्टं । ततश्चसर्ववेदव्याख्येयमित्यर्थः । महास्त्रं व्याहृत्यादिसर्वमूलमंत्राणांव्यंजकत्वात्प्रधानमंत्रप्रणवरूपं । धनुर्गृहीत्वा तत्रोपासानिशितं । सोपासनाचद्विविधाशास्त्राभ्यासस्वरूपिणी । ध्यानरूपापराचैवेत्यनुव्याख्यानोक्तेरुपासनाद्विविधा । तत्रश्रवणमननात्मकशास्त्राभ्यासरूपोपासनैवात्रोपासनापदेनविवक्षिता । नतुध्यानं । तस्यात्राविधीयमानत्वात् । तथाचोपासनयाश्रवणमननरूपोपासनयानिशितंतीक्ष्णीकृतं । अज्ञानसंशयविपर्ययरहितमितियाव

उप० । धनुर्गृहीत्वौपनिषदंमहास्त्रंशरंह्युपासानिशितंसंदधीत । आयम्यतद्भावगतेनचेतसालक्ष्यंतदेवाक्षरंसोम्यविद्धि ॥ ४ ॥

त् । शरंसंदधीत । व्यत्ययेनप्रथमपुरुषः । संधत्स्व संयोजयेतियावत् । संधानानंतरंचतद्भावगतेन सचासौभावश्चतद्भावः प्रसिद्धपदार्थोभगवान् । तत्प्रवणेनचेतसांतःकरणेन । तत् शरेणसंयोजितंधनुः । आयाम्यआकृष्य । लक्ष्यंलक्ष्यसदृशं । तत्पूर्वोक्तमक्षरमेवविद्धिजानीहि । ध्यानंकुर्वित्यर्थः ॥ ४ ॥ औपनिषदमित्यादिविशेषणसामर्थ्यात्प्रतीतमपिधनुःकंठरवेणप्रकटयन्नेवशरादिकमपिविशदयति॥ **प्रणवइति** ॥ प्रणवोधनुः लक्ष्यवेधसाधनत्वसाधर्म्यात् । आत्माशरः लक्ष्यलग्नत्वसाधर्म्यात् । तत्त्ब्रह्मलक्ष्यमुच्यते । शरवेधनीयत्वसाधर्म्यात् । अप्रमत्तेन भगवतिप्रमादरहितेनचेतसाब्रह्माख्यंलक्ष्यंवेद्धव्यं । सम्यक्ध्यातव्यं । तथासत्युपासकः । शरवत्तन्मयोब्रह्मप्रचुरोब्रह्मलग्नइतियावत् । भवेदितियोज्यं ॥ ५ ॥ एवंश्रवणमननध्यानरूपंभगवदुपासनंकार्यमित्युक्तं । इदानींतदेवकार्यंनान्यदेवतोपासनमितिसोपपत्तिकंवदन्जगत्स्थितिकर्तृत्वमुक्ताश्रयत्वरूपंभगवन्महिमांतरमप्याह ॥ **यस्मिन्द्यौरिति** ॥ यस्मिन्पुरुषे द्यौःपृथिवीअंतरिक्षंच । ओतंप्रविष्टं । यद्यपिपृथिव्यादेरंतरिक्षस्यचविशेष्यत्वात्तद्विशेषणओतशब्दे विशेषणानांचाजातेरितिसूत्रेणस्त्रीलिंगंनपुंसकलिंगंचप्राप्नोति । तथाप्यंतरिक्षस्यपाठतःपरत्वात्तद्विशेषणओतशब्देशब्दपरविप्रतिषेधेननपुंसकत्वमेवयुक्तं । विप्रतिषेधेपरंकार्यमितिसूत्रेणतुल्यबलविरोधेपरंकार्यमित्युक्तत्वादितिध्येयं । अनेनभगवतःसर्वलोकस्थितिकर्तृत्वमुक्तं । त्रिलोकविवक्षायांवैकुंठादेःसर्वलोकत्वादिति । एवंसर्वलोकाधारत्वमुक्त्वासर्वेंद्रियाधारत्वमप्याह ॥ **मनइति** ॥ मन

उप० । प्रणवोधनुःशरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते । अप्रमत्तेनवेद्धव्यंशरवत्तन्मयोभवेत् ॥ ५ ॥ यस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनस्सहप्राणैश्चसर्वैः । तमेवैकंजानथआत्मान मन्यावाचोविमुंचथामृतस्यैषसेतुः ॥ ६ ॥



श्च सप्तप्राणास्त्ववगतेःपंचप्राणास्तुकर्मणइतिस्मृतेःप्राणशब्दइंद्रियवाची । ततश्चसर्वैःप्राणैःइंद्रियैःसहयस्मिन्नोतमित्यन्वयः । तमात्मानंपरमात्मानंजानथ । छांदसोयंप्रयोगः । जानीत । श्रवणमननध्यानरूपंब्रह्मोपासनंकुरुतेतियावत् । अत्रसर्वसज्जनानांसंबोध्यत्वात्जानथेतिबहुवचनंयुक्तं । एकमेवेत्येवकारव्यावर्त्यमाह ॥ **अन्याइति** ॥ हेसज्जनाःयूयंअन्याःअन्यदेवताविषयाः वाचोविमुंचथ । व्यत्ययेनलोडर्थेलट् विमुंचतेत्यर्थः । अत्रान्यदेवतोपासननिषेधःप्राधान्याभिप्रायेण । परिवारतयातुतदुपासनमपिकार्यमेव । यथोक्तमनुव्याख्याने । परिवारतयाग्राह्याअपिहेयाःप्रधानतइति । ननुभगवदुपासनमेवकर्तव्यंनान्यदेवतोपासनमित्येतत्कुतइत्यतआह ॥ **अमृतस्येति** ॥ अत्रपीयूषममृतंसुधेतिकोशोक्तामृताश्रयत्वमुच्यते । तच्चान्यदेवतोपासनंनकार्यमित्यत्रहेतुर्नभवतीत्यतोव्याचष्टे ॥ **अमृतस्येति** ॥ समुदायापेक्षमेकवचनंश्रुतौभाष्येचप्रयुक्तं । भगवतोमुक्ताश्रयत्वमेवकुतः येनमुक्तस्येतिव्याख्यातमित्याशंक्यभगवतोमुक्ताश्रयत्वंसूत्र सहस्रनामवचनाभ्यांसमर्थयते ॥ **मुक्तोपसृप्येत्यादिना** ॥ मुक्तोपसृप्यत्वेत्यर्थः । तथाचैषःद्युभ्वाद्याश्रयआत्माअमृतस्यमुक्तवर्गस्यसेतुरिवसेतुः । वैकुंठादिलोकस्थभगवत्प्रापकइतिमंत्रार्थः । तथाच द्युभ्वाद्याश्रयतयोपासनंमोक्षफलार्थं । तच्चभगवतैवभवति । तस्यैवसर्वमुक्ताश्रयत्वेनमोक्षप्रदत्वसंभवात् । नचान्योपासनंमोक्षफलकं । तेषांमुक्ताश्रयत्वाभावेनमोक्षप्रदत्वासंभवात् । अतोभगवदुपासनमेवकार्यंनान्यदितिभावः ॥ ६ ॥ पूर्वंधनुर्गृही

भा० । अमृतस्यमुक्तस्यसेतुः । ॐ मुक्तोपसृप्यव्यपदेशात् । मुक्तानांपरमागतिरित्यादेः ।

त्वेत्यादिनाध्यानंकर्तव्यमित्युक्तं । तच्चगुणांतरोपसंहारपूर्वकमोंकारार्थगुणविशिष्टत्वेनैवकार्यमित्याह ॥ अराइवेति ॥ अत्रस इत्युक्तः कः । जायमानइत्युक्तोत्पत्तिश्चायुक्ता । अंतश्चरणंचव्यर्थमित्याशंकापरिहारायमंत्रंप्रमाणेनैवव्याचष्टे ॥ हृदय स्थइति ॥ अनेनतच्छब्दपरामृश्यंदर्शितं । एकधेत्यनेन मंत्रेबहुधेत्यत्रएकधेत्यपिग्राह्यमितिसूचितं ॥ भवन्निति ॥ प्रादुर्भ वन्नित्यर्थः । अनेनजायमानइतिव्याख्यातं ॥ स्वेच्छयेति ॥ अनेनैषणमेषः । इषुइच्छायां भावेघञ् । सुपांसुलुगितितृती यायाःसुरितिसूचितं ॥ सर्वजीवान्नियामयन्निति ॥ अनेनांतश्चरणप्रयोजनमुक्तं । स्वप्रयोजनार्थंनचरतिकिंतुपरप्रयोजनार्थ मिति । अत्रमंत्रेॐमित्येवेत्येवकारेणॐकारार्थगुणपूर्णत्वादिप्रकारेणैवध्यानंकार्यं नतुनिर्गुणत्वादिप्रकारांतरेणेतिसूचयति । फले भ्योयातीतिवत्परायेत्यत्रक्रियार्थोपपदस्यचकर्मणिस्थानिनइतिचतुर्थी । तथाच फलान्याहर्तुमितिवत्परंप्राप्तुमित्यर्थः । तमसो ऽव्यक्तात्परस्तादित्यनंतरंस्थितमितिशेषः । तदुक्तंगीताभाष्ये । तमसःपरस्तादित्यव्यक्तं वैतमःपरस्ताद्विसततइतिपिप्पलादशा खायामिति । तथाचतमसःपरस्तात्स्थितंअप्राकृतविग्रहमित्यर्थः । यद्वातमोमृत्युः । मृत्युर्वै तमोज्योतिरमृतमितिश्रुतेः । तथा चतमसःपरस्तात्स्थितंमृत्युरहितमित्यर्थः ॥ तदयंमंत्रार्थः ॥ नाभिशब्दोरथचक्रमध्यमावयववाची । पिंडिकानाभिरितिको शात् । रथनाभौरथचक्रमध्यमावयवे । अराइवयत्रभगवतिनाड्यःब्रह्मनाड्यादिप्रधाननाड्यः । द्वासप्ततिसहस्रप्रतिशाखा

उप० । अराइवरथनाभौसंहतायत्रनाड्यः । सएषोंतश्चरतेजायमानः ॥ ७ ॥ ओमित्येवध्यायतआत्मानंस्वस्तिवःपरायतमसःपरस्तात् ॥ ८ ॥

भा० । हृदयस्थःसदाविष्णुर्बहुधाचैकधाभवन् । चरतिस्वेच्छयैवांतःसर्वजीवान्नियामयन्नितिप्रवृत्ते ।

नाड्यश्च । संहताःसंगताः । सनाड्याश्रयहृदयस्थोविष्णुरेषः । व्यत्ययोयं । स्वेच्छयाबहुधाजागरादिप्रदानार्थं विश्वादि नानारूपेण । एकधा सुप्तिकालेविश्वाद्येकीभूतप्राज्ञरूपेणच । जायमानःप्रादुर्भवन्सन् । अंतः नेत्राद्यंतः । चरतेजागरादि प्रदानेनसर्वजीवनियमनार्थंसर्वदाचरति । एवंभूतगुणकंतमसःपरस्तात्स्थितं अप्राकृतविग्रहं मृत्युरहितंचात्मानंहृदयस्थंविष्णुं । पराय परब्रह्मप्राप्त्यर्थमित्यर्थः । ॐमिति ॐमितिमंत्रेण ॐकारार्थगुणोपसंहारपूर्वकमितियावत् । निर्गुणत्वादिप्रकारव्यव च्छेदार्थमेवकारः । ध्यायत हेशिष्याइतियोज्यं । ध्यानफलमाह ॥ स्वास्तिवइति ॥ एवंसतिवः नमःस्वस्तीतिचतु र्थी । युष्मभ्यंस्वस्तिमंगलं । अशेषानिष्टनिवृत्तिविशिष्टस्वरूपानंदाविर्भावरूपंस्यादिति ॥ ७–८ ॥ ननुहृदयस्थोबहुधैकधाचभवं श्चरतीत्युक्तं । तत्किंक्वचित्प्रदेशेसम्यक्स्थित्वैवप्रदेशांतरेनानाभूतश्चरतीत्यतआह ॥ यःसर्वज्ञइति ॥ यःसर्वज्ञः सर्वविंदती तिसर्ववित् । विद्लृलाभइत्यस्माद्विदभिदच्छिदेत्यादिनाक्विप् । प्राप्तसकलकामः । यस्यएषःजागरादिप्रदत्वरूपोमहिमा । भुविप्र सिद्धः । स्वर्गादिस्थानांस्वप्नाद्यभावात् । एषआत्माविष्णुर्ब्रह्मपुरेदेहे । तत्रापिदिव्येदिविभूताकाशेभवंदिव्यं । भूताकाशा त्मकमितियावत् । दहरोस्मिन्नंतराकाशइत्यत्राकाशशब्देनभूताकाशोविवक्षितइतिछांदोग्यभाष्येहृदयाकाशस्यभूताकाशात्मक त्वाभिधानात् । तस्मिन्व्योम्निआकाशेसंप्रतिष्ठितः । सर्वदाविर्भूततयाप्रतिष्ठितइत्यर्थः ॥ ९ ॥ नन्वेवंतर्हिविष्णुर्देहेकस्मिंश्चि दवकाशविशेषेवर्ततइतिप्राप्तं । तथाचहृदयस्थत्वभंगइत्याशंकांपरिहरन् ध्यानेनब्रह्मापरोक्षज्ञानंभवतीत्याह ॥ मनोमयइ

उप० । यस्सर्वज्ञःसर्वविद्यस्यैषमहिमाभुवि । दिव्येब्रह्मपुरेह्येषव्योम्न्यात्मासंप्रतिष्ठितः ॥ ९ ॥ मनोमयःप्राणशरीरनेताप्रतिष्ठितोन्नेहृदयंसन्निधाय । तद्विज्ञानेनपरिपश्यंति

ति ॥ अत्रयत्तच्छब्दावध्याहार्यौ । योहृदयंसन्निधायसम्यगाश्रित्य मनोमयः मयतेसावितिमयः । अयवयपयमयेत्यादिदं
डकपठितान्मयतेःपचाद्यच् । धातूनामनेकार्थत्वात्प्रेरकइत्यर्थः । मनसोमयःमनोमयः । प्राणशरीरनेता प्राणानामिंद्रियाणां
शरीरस्यचनेताप्रेरकः । सःहृदयस्थोविष्णुः । हृदयंसन्निधायस्थिते व्योम्नीत्यनुवर्तते । हृदयाकाशे । अन्नशब्दोमर्त्यवाची । यदन्नेना
तिरोहतीतिमंत्रव्याख्यानेतथैवोक्तेः । तथाचहृदयावकाशस्थितेअन्नेमर्त्ये प्रतिष्ठितइतियोजना । यथामंदिरेमंजूषातत्रमालास्ती
त्यभिप्रायेण मंदिरेमणिमालेत्युच्यते । तथाहृदयस्थव्योम्निजीवःतत्रबिंबरूपोविष्णुरस्तीत्यभिप्रायेणव्योम्न्यात्मासंप्रतिष्ठितइत्यु
क्तं । एवंहृदयेव्योम । तत्रोक्तरीत्याविष्णुरितिभावेनहृदयस्थोविष्णुरुच्यतइतिभावः । तदनेनोक्तशंकानिरासः ॥ तद्विज्ञा
नेनेति ॥ धियारमंतइतिधीराः श्रवणमननपूर्णाः । विज्ञानेनस्वस्वयोग्यध्यानेन । यद्ब्रह्मआनंदरूपं आनंदात्मकाकारविशि
ष्टं । रूपंस्वभावेसौंदर्येआकारश्लेषयोरपीतिरूपशब्दस्याकारवाचित्वावगमात् । अतएवामृतंस्वरूपतोदेहतश्चनाशरहितं विभाति
स्वतःप्रकाशते । नित्याविर्भूतरूपमितियावत् । तद्ब्रह्मपरिपश्यंतीत्यन्वयः । अत्रसाक्षात्कारविषयदर्शनार्थमानंदरूपमित्या
द्युक्तं ॥ १० ॥ एवंध्यानेनब्रह्मसाक्षात्कारोभवतीत्युक्तं । ततःकिंभवतीत्यतआह ॥ भिद्यतइति ॥ अत्रमंत्रे तस्मिन्दृष्टे
परावरइत्यनेनभगवतःपरावरात्मकत्वमुच्यतइत्यन्यथाप्रतीतिनिरासायपरावरपदंव्याचष्टे ॥पराअपीति॥ रमाब्रह्मादयइत्यर्थः।

धीराआनंदरूपममृतंयद्विभाति ॥ १० ॥ ॥ उप० । भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः । क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे ॥ ११ ॥
भा० । पराअप्यवरायस्मात्सहिविष्णुःपरावरः ।



हिशब्दःतस्मादित्यर्थे । मंत्रेभिद्यतइतिकर्मकर्तरिलकारः । भिद्यतेकाष्ठंस्वयमेवेतिवत् । एवंछिद्यंतेक्षीयंतइत्यत्रापिबोध्यं ।
हृदयग्रंथिरविद्या । अयतेसावित्ययः । पचाद्यच् । हृदिअयःहृदयः । सप्तमीतियोगविभागात्समासः । ततश्चजीवोविष्णुश्चेत
दर्थः । ग्रंथिशब्दोबंधकवाची । चौरादिकात्ग्रंथबंधनइत्यस्मात्करणेऔणादिकेडप्रत्ययेकृतेउक्तार्थलाभात् । ततश्चहृदयस्यजी
वस्यविष्णोश्चग्रंथिःबंधिकेतिकृतेहृदयग्रंथिपदादविद्यालभ्यते । स्वभावाज्ञानवादस्येत्यनुव्याख्यानसुधायामज्ञानस्यजीवेश्वरो
भयावरकत्वप्रतिपादनात् । अतएवसुधायांहृदयग्रंथिरविद्येतिव्याख्यातं । अविद्यानामसत्वादिगुणविशिष्टमूलप्रकृतिः । द्र
व्यंकर्मचेत्यनुव्याख्यानसुधायांगुणविशिष्टप्रकृतेर्विद्याविरोधित्वेनाविद्यात्वाभिधानात् । तद्भेदोनामतद्ध्वंसः । मूलप्रकृतेर्नि
त्यत्वेपितस्याःउक्तोयोगुणविशिष्टाकारःतस्यश्रुत्यादिबलेनध्वंसांगीकारेदोषाभावात् । अतएवसुधायामनादेःकीदृशोविनाशः
इत्याशंक्यस्वरूपध्वंसएवेत्युक्तं । प्रागविद्याग्रंथिंविकिरतीत्यत्रजीवस्याविद्ययासहयोग्रंथिस्तस्यशिथिलीभावलक्षणोनाशःश्रवणे
नभवतीत्युक्तं । अत्रत्वविद्यायाएवापरोक्षज्ञानेनध्वंसोभवतीत्युच्यतइतिमहान्भेदः । संशयाइत्यत्रसंशयपदंबंधार्थकं । सं
शयोनसंशयः । संपूर्वाच्छीङोभावेऽजितिसूत्रेणाच्प्रत्ययः । धातूनामनेकार्थत्वाच्छीङोबंधार्थकत्वं । ततश्चसंशयाइत्यस्यबंधाइ
त्यर्थः । तेचबहवः अविद्याबंधः लिंगदेहबंधः परमाच्छादकप्रकृतिबंधः कामक्रोधादिबंधः कर्मबंधश्चेति । तत्राविद्याबंधकर्मबं
धयोर्नाशस्यैतन्मंत्रेपृथगुच्यमानत्वात्तदुभयव्यतिरिक्तबंधसंग्रहायसर्वेतिसंशयविशेषणं । तस्मिन्दृष्टइत्यनेनदृष्ट्याप्रसन्नःपरमे
श्वरएवसर्वान्बंधान्विनाशयतीतिसूच्यते । तच्चोक्तमनुव्याख्याने । यथादृष्ट्याप्रसन्नःसन्राजाबंधापनोदकृत् । एवंदृष्टःसभग

वान्कुर्याद्बंधविभेदनमिति ॥ ततश्चायंमंत्रार्थः ॥ पराउत्कृष्टारमाद्याःअवराअपकृष्टायस्मात्सतथोक्तः । परावरेतस्मिन्नुक्तल क्षणेभगवतिदृष्टेसति । अस्यापरोक्षज्ञानिनः हृदयग्रंथिरविद्या । भिद्यतेविनश्यति ॥ छिद्यंतेसर्वसंशयाइति ॥ सर्वेसकलाः संशयाःलिंगदेहादिबंधाः । छिद्यंतेविनश्यंति । कर्माणिचसंचितागामिप्रारब्धानिक्षीयंते । अत्रक्षयोनामसंचितानांनाशः । आ गामिनामश्लेषः । प्रारब्धानांतुफलह्रासइतिविवेक्तव्यं । ब्रह्मसाक्षात्कारभोगाभ्यांसर्वकर्मक्षयेसतिज्ञानिनोर्चिरादिमार्गेणसांतानि कलोकंप्रतिगच्छंति । तदामध्येसर्वैरपिज्ञानिभिःशिंशुमारंनमस्कृत्यैवोत्तरत्रगंतव्यं । तद्विश्वनाभिंत्वभिपद्येत्युपक्रम्य नमस्कृतंब्र ह्मविदामुपैतीतिद्वितीयस्कंधोक्तेः । अशेषजगदाधारःशिंशुमारोहरिःपरः । सर्वेब्रह्मविदोनत्वातंयांतिपरमंपदमितिस्मृतेश्च । न मस्कारोनाम नकरशिरःसंयोगादिकं । अतिप्रसंगात् । किंतुमनोवृत्तेस्तत्प्रवणता । मनोवृत्तेस्तत्प्रवणताहिवंदनमितिसुधोक्तेः ॥ ११ ॥ अतःशिंशुमारेमनोवृत्तिप्रावण्यार्थंशिंशुमारनिर्धारणायतत्स्वरूपंवदन्नेवतज्ज्ञानंविधत्ते ॥ हिरण्मयइति ॥ नन्वत्र कोशइत्यभिव्यापकाधिकरणेसप्तमी । ततश्चब्रह्मांडव्यापिभगवद्रूपमुच्यतइतिप्राप्तं । नचसर्वोपास्यं । सर्वेषांतदनधिकारात् । आत्मविदइतिनिरंकुशेनबहुवचनेनसर्वेषांज्ञानिनांब्रह्मांडस्थभगवदुपासनप्रतीतेरतोमंत्रतात्पर्यंप्रमाणेनैवाह ॥ ब्रह्मांडेति ॥ अ नेनकोशइतिसप्तमीसर्वस्मिन्नात्मास्तीतिवन्नाभिव्यापकाधिकरणे । किंतुकटेआस्तइतिवदौपश्लेषाधिकरणे । तेनब्रह्मांडमध्य

उप० । हिरण्मयेपरेकोशेविरजंब्रह्मनिष्कलं । तच्छुभ्रंज्योतिषांज्योतिस्तद्यदात्मविदोविदुः ॥ १२ ॥

भा० । ब्रह्मांडमध्यगोनित्यंतपत्येषरवौस्थितइतिच ।

गइतिपर्यवस्यतीतिसूचितं । ज्योतिषांज्योतिरित्येतद्व्याचष्टे ॥ तपतीति ॥ सूर्यादिकंप्रकाशयतीत्यर्थः ॥ ततश्चायंमंत्रार्थः ॥
हिरण्मयेसुवर्णविकारे । परेअत्युत्कृष्टे । कोशेंडे । पेशीकोशोद्विहीनेंडमित्यमरोक्तेः । ब्रह्मांडमध्यइतियावत् । विरजंदोषरहितं ।
अकारांतोपिरजशब्दोस्तिविरजानदीमितिप्रयोगात् । रजंतुरजसासहेतिद्विरूपकोशाच्च । तेनविरजमितियुक्तं । निष्कलंषोडश
कलाविशिष्टशरीररहितंशिंशुमाराख्यं । ब्रह्म वर्ततइतिशेषः । तत्शिंशुमाराख्यंब्रह्म । शुभ्रंशुक्लं । ज्योतिषांसूर्यादीनांज्योतिःप्रका
शकं । एवंशिंशुमारस्वरूपंनिरूप्यतज्ज्ञानमवश्यंसंपादनीयमितिसोपपत्तिकमाह ॥ तद्यदिति ॥ यद्यस्मात्पूर्वेआत्मविदःब्रह्मापरो
क्षज्ञानिनःशिंशुमारंविदुर्ज्ञातवंतः । तत्तस्मादाधुनिकाअप्यात्मविदःशिंशुमारंविदुःविद्युरितियावदिति । एवंशिंशुमारश्रवणादिवि
धिपरत्वेनमंत्रोयंव्याख्यातः । इदानींब्रह्मविद्याभ्यासांगगायत्रीमंत्रजपांगत्वात्सूर्यांतर्गतनारायणश्रवणादिकमपिकार्यमित्यर्थप्रति
पादकोयंमंत्रइतिभावेनहिरण्मयेपरेकोशइत्येतद्व्याचष्टे ॥ रवौस्थितइति ॥ रविमंडलेस्थितइत्यर्थः । अत्ररवावित्यनेनहिरण्म
येकोशइतिव्याख्यातं । तथाहि । कोशशब्दःपात्रवाची । कोशोऽस्त्रीकुड्मलेपेश्यांपात्रेशब्दादिसंग्रहे । जातिकोशेर्थसंघातेदि
व्येखड्गपिधानकेइतितस्यनानार्थकत्वावगमात् । ततश्चहिरण्मयेकोशइत्यस्यहिरण्मयेपात्रइत्यर्थः । हिरण्मयपात्रंचसूर्यमंडलं ।
पात्रंहिरण्मयंसूर्यमंडलंसमुदाहृतमितीशावास्यभाष्योक्तेःस्थितइत्यनेनमंत्रेस्थितमित्यध्याहार्यमितिसूचयति । ज्योतिषांज्योतिरि
त्येतत्तपतीतिव्याख्यातं ॥ ततश्चायंमंत्रार्थः ॥ तत्परावरंब्रह्म परेउत्कृष्टे हिरण्मयेकोशेपात्रे सूर्यमंडलइतियावत् । स्थित
मितिशेषः । अनेनध्येयःसदासवितृमंडलमध्यवर्तीनारायणइत्यादिगायत्रीमंत्रजपांगध्यानश्लोकोक्तसूर्यमंडलमध्यस्थत्वंसंगृहीतं ।

विरजंनिष्कलमितिप्राग्वद्याख्येयं ॥ **शुभ्रमिति** ॥ शुभेसमीचीनेविरिंचेरमतइतिशुभ्रं । अनेनसरसिजासनसन्निविष्टइत्युक्तस्य संग्रहः । शुभैःकेयूरादिविभूषणैःरमतइतिकृतेतुउत्तरार्धोक्तस्यसंग्रहः । एवंसूर्यांतर्गतब्रह्मणोध्येयगुणानुक्त्वा इदानीमुक्तगुणविशिष्टत्वेनध्यानंकार्यमितिसोपपत्तिकमाह ॥ **तद्यदिति** ॥ यत्यस्मात् । आत्मविदःप्राचीनाःसूर्यांतर्गतनारायणज्ञानिनः तंविदुः सूर्यमंडलमध्यस्थत्वादिनाप्रकारेणध्यातवंतस्तत्तस्मादिदानींतनाअपिसूर्यमंडलांतर्गतनारायणं विदुः लकारव्यत्ययः विद्युः । ध्यायेयुरितियावत् ॥ १२ ॥ प्राक्तत्रतत्रस्रष्टृत्वादिरूपंभगवन्माहात्म्यमुक्तं । इदानींज्योतिषांज्योतिरित्युक्तंविशदयन्बाह्यप्रकाशहेतुत्वरूपंतन्महिमांतरमाह ॥ **नतत्रेति** ॥ ननुनतत्रसूर्योभातीत्यादिनासूर्यादयोभगवतिनप्रकाशंतइत्युच्यते । नचतद्युक्तं । सूर्यादीनांसर्वेषामपिभगवतिस्थित्वैवप्रकाशकत्वादित्यतस्तद्याचष्टे ॥ **सूर्यादयइति** ॥ सूर्यचंद्रादयइत्यर्थः । तमित्यनेननतत्रेतिनिपातःतमित्यर्थइतिसूचितं । भासयंतीत्यनेनभातिभांतीतिपदद्वयेभाधातुरंतर्णीतण्यर्थइतिसूचितं ॥ **ततश्चायंमंत्रार्थः** ॥ सूर्यस्तत्रतं प्रागुक्तंभगवंतं । नभातिनभासयति । एवंचंद्रतारकं । द्वंद्वैकवद्भावोयं । तंनभासयति । इमाविद्युतः तंनभांतिनभासयंति । यदैवंलक्षयोजनाद्यंतरेस्थित्वाप्रकाशकाअपिसूर्यादयोनभगवंतंप्रकाशयंतितदाहस्तवितस्त्यादिपरिमितदेशेप्रकाशकोयमग्निःकुतोभगवंतं भासयेदित्यर्थः । तदुक्तं । नतद्भासयतेसूर्योनशशांकोनपावकइति । ननुयथासूर्यादीनांनभगवत्प्रकाशकत्वंतथाभगवतोपिसूर्यादिप्र

उप० । नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः । तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति ॥ १३ ॥
भा० । सूर्यादयस्तंनभासयंति ।



काशकत्वाभावेनमहिमातिशयोनोपपद्यतइत्यतआह ॥ **तमेवेति** ॥ सर्वंसूर्यादिकं भांतंभासयंतंभगवंतं अन्वेवानुसृत्यैव तदधीनतयैवेतियावत् । भातिप्रकाशते । अनेनसूर्यादिसर्वतेजसांभगवत्प्रकाशाधीनप्रकाशकत्वमुक्तं । नकेवलमेतावत् । किंत्विदंसर्वंजगदपि तस्यभगवतोभासातदधीनभासातदीयभासाच विभातिप्रकाशते । जगदपिभगवत्प्रकाशप्रकाश्यंतदधीनसूर्यादिप्रकाश्यंचेतियावत् । तदुक्तं । यदादित्यगतंतेजोजगद्भासयतेखिलं । यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमिति । मामकमित्यस्यमदीयंमदधीनंचेत्यर्थः ॥ १३ ॥ हृदयंसन्निधायप्रतिष्ठितइतिहृदयस्थत्वोक्त्याहिरण्मयइतिमंत्रेब्रह्मांडमध्यस्थत्वसूर्यमंडलस्थत्वोक्त्याप्राप्तांपरिच्छिन्नत्वशंकांनिवारयन्नेवदेशतःकालतोगुणतश्चव्याप्तत्वाद्ब्रह्मैवसर्वोत्तममित्येवंरूपंमहामाहात्म्यमाह ॥ **ब्रह्मैवेति** ॥ अत्रेदंविश्वंब्रह्मैवेत्यपव्याख्याननिरासायब्रह्मैवेदंविश्वमित्येतद्याचष्टे ॥ **इदमिति** ॥ विश्वंपूर्णमित्यनेननायंविश्वशब्दोजगद्वाची । ब्रह्मणोजगदैक्यस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च । किंतुविशतिसर्वमितिव्युत्पत्त्यापूर्णत्वार्थइतिसूचितं । अत्रोद्देश्यविधेयभावेनप्रत्येकमेवान्वयः । तेनभिन्नान्येवैतानिवाक्यानीतिसूचयितुमिदंवरिष्ठमित्येतद्योजयति ॥ **इदमेवेति** ॥ वरिष्ठत्वंचनराजादिवदितिभावेनाह ॥ **वरिष्ठंसर्वोत्तममिति** ॥ वरमित्यनेनैवोत्तमत्वसिद्ध्याइष्ठन्प्रत्ययेनअतिशयेनवरत्वमुक्तं । तच्चसर्वोत्तमत्वमेवेतिभावः । नन्विदंविश्वंब्रह्मैवेतिव्याख्यानेकोदोषइत्यतआह ॥ **इदंशब्दानामिति** ॥ ब्रह्मविषयएवेत्येवशब्देन नतुविश्वविषयइत्युक्तं । तेनविश्वविषयकत्वे

उप० । ब्रह्मैवेदममृतंपुरस्ताद्ब्रह्मपश्चाद्ब्रह्मदक्षिणतश्चोत्तरेण । अधश्चोर्ध्वंचप्रसृतंब्रह्मैवेदंविश्वमिदंवरिष्ठं ॥ १४ ॥ खं० ४ ॥
भा० । इदंब्रह्मैवविश्वंपूर्णं । इदमेववरिष्ठंसर्वोत्तमं । इदंशब्दानांबहुत्वाद्ब्रह्मविषयएवदेशब्दः ।

बाधकंसूचितं। यदिब्रह्मैवेदं विश्वमितीदंशब्दोविश्वविषयःस्यात्तदेतरावपीदंशब्दौ विश्वविषयौस्यातांसन्नियोगशिष्टानामितिन्यायात्। तथाचेदममृतंमुक्तंविश्वंब्रह्मैव । इदंविश्वमेवपुरस्तादित्यादिइदंविश्वमेवरिष्ठमितियोजनीयंस्यात्। नचैतद्युक्तं। विश्वस्यसर्वदिग्व्यापकत्वाभावात्सर्वोत्तमत्वाभावाच्च । अतोब्रह्मविषयएवेदंशब्दः । तत्रचवाक्यभेदेनयोजनायांनदोषइतिभावः ॥ ततश्चायंमंत्रार्थः ॥ अमृतंनित्यमुक्तं। इदंब्रह्मैव। पुरस्तात्प्राच्यांदिशि। पुरस्तात्पूर्वदिश्यपीतिकोशात्। पश्चात्प्रतीच्यांदिशि । दक्षिणतःदक्षिणस्यांदिशि। उत्तरेणोत्तरस्यांदिशि । अधश्चाधोदिशि। ऊर्ध्वंचोर्ध्वदिशि । प्रसृतंस्थितं । देशतोव्याप्तमितियावत्। नकेवलमेतावत्। किंत्विदंब्रह्मैवविश्वंपूर्णं कालतोगुणतश्चव्याप्तमितियावत् । यस्मादेवंतस्मादिदंब्रह्मैववरिष्ठमतिशयेनवरंसर्वोत्तममिति। तदुक्तं। देशतःकालतश्चैवगुणतश्चत्रिधाततिः । सासमस्ताहरेरेवेत्यादि ॥ १४ ॥ चतुर्थःखंडः ॥ ४ ॥ नन्विदंवरिष्ठमितिब्रह्मणःसर्वजीवोत्तमत्वंयदुक्तं । तदयुक्तं। जीवब्रह्मणोरभेदेनतयोर्नीचोच्चभावायोगादित्याशंकानिरासायसोपपत्तिकंतयोर्भेदमाह ॥ द्वासुपर्णेति ॥ नन्वत्रस्वाद्वत्तीतिजीवस्यस्वादुमात्रभोक्तृत्वमुच्यते । विशेषणविधिःशेषनिषेधंगमयतीतिन्यायात्। नचतद्युक्तं। अप्रामाणिकत्वादित्यतोव्याचष्टे ॥ स्वादुवत्सर्वदात्तीति ॥ अनेनस्वादुशब्दोनमुख्यार्थः। किंतुगौणइतिसूचितं। नचतद्युक्तं। मुख्येबाधकाभावादित्यतःप्रतिज्ञापूर्वंतदाह ॥ नतुस्वाद्वेवेति ॥ जीवःस्वा

उप० । द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते । तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति ॥ १ ॥

भा० । स्वादुवत्सर्वदात्ति । नतुस्वाद्वेव । तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोनशद्यःपितरंनवेदेत्यज्ञानांस्वादुनिषेधात् ।

दुमात्रमत्तीतिश्रुत्यर्थोनभवतीत्यर्थः । कुतइत्यतआह ॥ तस्येदाहुरिति ॥ योग्रेसर्वापेक्षयाग्रेस्ति श्रेष्ठइतियावत् । तस्येत्त
स्यैवस्वादुपुण्यरूपंपिप्पलंदेहाख्याश्वत्थफलंआहुः भोग्यमितिवदंति । तदुक्तं । पुण्यमेवामुंगच्छतीति । रसंपिबतिकर्मजमिति
च । यस्तुपितरंनवेदजगज्जनकंभगवंतंनजानाति। अतएवनशत्नाशवान्। तस्य उत्उत्कृष्टं। तत्पुण्यरूपंफलं न भोग्यंनभवती
तिश्रुत्यर्थः ॥ अज्ञानामिति ॥ जीवानामित्यर्थः । ननुयद्येवमीश्वरस्यपुण्यफलयोगः तर्हिअनश्नन्नन्यइत्ययुक्तंस्यात् । तत्रभो
गमात्रनिषेधादित्यतोऽनश्नन्नित्येतद्व्याचष्टे ॥ जीवाद्यमेवनाश्नातीति ॥ जीवभोग्यमसारंपुण्यफलंसर्वपापफलंचनाश्नातीत्य
नश्नन्नित्यस्यार्थः । तेनेश्वरस्यपुण्यफलसारभोक्तृत्वाज्जीवभोग्यासारपुण्यभोगाभिप्रायेणपुण्यभोगाभावांगीकारेपिनानुपपत्ति
रितिभावः । सर्वथाशनाभावएवार्थःकिंनस्यादित्यतआह ॥ नतुनाश्नात्येवेति ॥ तत्रहेतुमाह ॥ तस्येदाहुरिति ॥ नन्वेवं
तर्हिअनश्नन्नितितस्येदितिचश्रुत्योर्विरोधइत्यतआह ॥ स्वातंत्र्येणैवेति ॥ दुःखाभोगादभोक्तेत्यनेनानश्नन्नित्येतद्व्याख्यातं ।
स्वातंत्र्येणैवभोक्तृत्वाद्भोक्ताचेत्यनेनतुतस्येदाहुरितिवाक्यंव्याख्यातं । स्वातंत्र्येणैवेतिविशेषणेनेदंसूचयति । जीवोभगवांश्चपु
ण्यफलभोक्तातथापिजीवोभगवदधीनतयाभोक्ता । जीवस्त्वसारभोक्तेत्यपिग्राह्यं । तेनतत्रतत्रजीवस्यपुण्यफलभोक्तृत्वोक्तावपि
तन्नोन्नशद्यइतिश्रुतौपुण्यफलनिषेधेपिनविरोधइतिज्ञातव्यं ॥ ततश्चायंमंत्रार्थः ॥ द्वासुपर्णेत्यत्रसुपांसुलुगित्यादिनाद्विवच

---

भा० । जीवाद्य(घ)मेवनाश्नातिभगवान्नतुनाश्नात्येव । तस्येदाहुःपिप्पलंस्वाद्वित्युक्तत्वात् । स्वातंत्र्येणैवभोक्तृत्वाद्दुःखाभोगाचसर्वदा । अभोक्ताचैवभोक्ताचभगवा
न्विष्णुरव्ययइतिचतत्त्वसारे ।

नस्यडादेशः । सयुजासखायेत्यत्रत्वाकारादेशः । अन्यथाडित्वाट्टिलोपापत्तेरितिध्येयं । सयुजासयुजौसंयुक्तौसदावियोगरहि
तौ । सखायाउपकार्योपकारकभावेनसखायौ । सुपर्णासुपर्णौसुपर्णसदृशौ । द्वाद्वौजीवेशौ । समानंएकंवृक्षंदेहाख्याश्वत्थवृक्षं ।
परिषस्वजातेआलिलिंगतुः । तयोःसुपर्णयोर्मध्ये । अन्यःएकः । भिन्नार्थकत्वेअन्यारादितिपंचमीप्रसंगात् । जीवइतियावत् ।
पिप्पलंअश्वत्थफलरूपंदेहजनितकर्मफलं । स्वादुस्वादुवत् सर्वदाअत्ति । अस्वाद्वेवस्वादुत्वेनात्तीतियावत् । यथोक्तंभागवतता
त्पर्ये । स्वादोरदनवद्ध्यत्तिजीवोस्वाद्वपियत्सदा । अनारतंपारवश्यात्स्वाद्वत्तीतिततःश्रुतिरिति । अन्यईश्वरःअनश्नन्पुण्यफ
लमध्येअसारभागंपापफलंचेतिशेषः । अभिचाकशीति । पुनःपुनरतिशयेनवाप्रकाशते । नतुस्वस्थित्यैतदपेक्षते । अभिपूर्वस्य
कशगतिशासनयोरितिधातोर्यङ्लुकिसतिरूपमेतत् । अनेकार्थत्वाद्धातूनांप्रकाशार्थकत्वमपीतिबोध्यं ॥ १ ॥ ननुयदुक्तंपिप्पलं
स्वाद्वत्तीतिजीवस्यास्वादुभोक्तृत्वं तदयुक्तं । ईश्वरसन्निधानसामर्थ्येनास्वादुभोगस्यैवायोगादित्याशंकापरिहारायईश्वरस्यजीव
बंधकत्वाज्जीवस्यास्वादुभोगोपपत्तेरितिभावेनभगवतोबंधकत्वंवदंस्तस्यमोचकत्वरूपमहिमांतरमप्याह ॥ **समानइति** ॥ अ
त्रानीशत्वभावनयाइत्यन्यथाप्रतीतिनिरासायअनीशयेत्यस्यार्थमन्वयंचप्रतिपादयत्प्रमाणमेवपठति ॥ **नास्तीशइति** ॥ अनी
शयेत्यस्यविशेष्यंदर्शयति ॥ **हरेर्मतिरिति** ॥ शक्तिरित्यर्थः । अविभिन्नापिसेच्छादिभेदैरपिविभाव्यतइतिसूत्रभाष्योक्तस्मृतौ

उप० । समानेवृक्षेपुरुषोनिमग्नोऽ(अ)नीशयाशोचतिमुह्यमानः । जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमितिवीतशोकः ॥ २ ॥
भा० । नास्तीशोस्यायतोन्योहिततोऽनीशाहरेर्मतिः । तयामुह्यतिजीवः



ईश्वरशक्तेरिच्छामतिरित्यादिशब्दवाच्यत्वाभिधानात् । तेन लोकचित्तस्यबंधनं ॥ स्वसामर्थ्येनदेव्याचकुरुतेसमहेश्वरइतिगीता
भाष्योक्तस्मृतौईश्वरशक्तेर्बंधकत्वाभिधानेपिनविरोधः । एवंयत्रेश्वरेच्छायाःबंधकत्वमुच्यतेतत्रापीच्छापदेनशक्तिग्रहणे नविरो
धइतिबोध्यं । जुष्टंयदेत्युत्तरार्धतात्पर्यमुक्तं ॥ **तमन्यंज्ञात्वेति** ॥ ननुजीवब्रह्मणोरभेदात्ब्रह्मणोजीवान्यत्वज्ञानंमिथ्याज्ञान
मेव । अतःकथंतन्मोक्षजनकंस्यादित्यतआह ॥ **जीवादन्यइति** ॥ यतोयमीश्वरःस्वतंत्रःस्वसत्तादौपरानपेक्षः । तत्कुतइत्यत
उक्तं । पुरुषोत्तमइतिहेतुगर्भविशेषणं । क्षराक्षरपुरुषोत्तमत्वादित्यर्थः । एतच्चप्रथितःपुरुषोत्तमइतिगीतासिद्धमितिसूचयितुंपु
रुषोत्तमपदप्रयोगः । एवंक्षराक्षरपुरुषांतर्भूतत्वाज्जीवोस्वतंत्रइत्यपिग्राह्यं । अतोविरुद्धधर्माधिकरणत्वादयमीशोजीवादन्यइति
योज्यं ॥ **ततश्चायंमंत्रार्थः** ॥ पुरुषोजीवःसमानेएकस्मिन्वृक्षेदेहे । निमग्नःस्थितोपि । अनेनमोहाभावप्रसंजकमुक्तं । अनी
शयाअविद्यमानःहरेरन्यईशोयस्याःसाअनीशा तयाभगवन्मत्याहरेःशक्त्या । मुह्यमानःदेहादौममतादिमोहयुक्तःसन् । सेवति
दुःखमनुभवति । नन्वेवंतर्हीश्वरशक्तेर्नित्यत्वात्कदाचिद्दुःखभोगनिवृत्तिर्नस्यादित्यतआह ॥ **जुष्टमिति** ॥ अयंपुरुषः जुष्टं
सर्वसेव्यं । जुषीप्रीतिसेवनयोरितिधातुव्याख्यानात् । ईशंविष्णुं । अन्यंजीवात्यदापश्यति । इति तदेतत्सत्यमित्याद्यु
क्तप्रकारेणाखिलकर्माराध्यत्वरूपंजगत्स्रष्टृत्वादिरूपंच । अस्यईशस्यमहिमानंचयदापश्यति तदावीतशोकः अशेषानिष्टनिवृत्ति
रूपमुक्तियुक्तोभवतीति । तथाचबंधकेश्वरशक्तेर्नित्यत्वेपिभगवदपरोक्षज्ञानरूपोत्तेजकलाभेदुःखनिवृत्तिःस्यादेवेतिभावः ॥ २ ॥

भा० । तमन्यंज्ञात्वाविमुच्यते । जीवादन्यःस्वतंत्रोयंयतोतःपुरुषोत्तमइतिब्रह्मसारे ।

क्षीयंतेचास्यकर्माणीतिपूर्वमंत्रेभगवदपरोक्षज्ञानेनानिष्टकर्मनिवृत्तिरुक्ता । तांविशदयन्नेवअपरोक्षज्ञानाव्यवहितोत्तरक्षणभाविफ
लांतरमप्याह ॥ यदेति ॥ अत्रपुण्यपापेविधूयेतिसर्वपुण्यस्यज्ञाननाश्यत्वमुच्यते । सामान्येनपुण्यग्रहणात् । तदयुक्तं।प्रारब्ध
स्यभोगैकनाश्यत्वादकाम्यपुण्यस्यज्ञानजनकत्वाच्चेत्यतःपुण्यंविशिनष्टि।।पुण्यंचानिष्टमिति।।चशब्दादप्रारब्धमपिसमुच्चीयते ।
अयमाशयः।पुण्यंद्विविधं।काम्यमकाम्यंचेति।तत्राकाम्यंअपरोक्षज्ञानजननोपक्षीणं।काम्यमपिद्विविधं।प्रारब्धमप्रारब्धंचेति।तत्रेष्ट
स्यनज्ञानेननाशः । किंतुभोगेन । इष्टनाशस्यापुरुषार्थत्वात् । अन्यथास्वोदयाफलदंज्ञानमितिस्मृतिविरोधात् । अतःपरि
शेषात्अप्रारब्धमनभीष्टंचपुण्यंज्ञानेनविनश्यतीतिपर्यवस्यति । तदुक्तं । अनभीष्टमनारब्धंपुण्यमप्यस्यनश्यति । किमुपा
पंपरंब्रह्मज्ञानिनोनात्रसंशयइति ॥ ततश्चायंमंत्रार्थः ॥ पश्यतीतिपश्योद्रष्टा जीवइतियावत् । पाघ्राध्माधेट्दृशःशइतिसूत्रेण
दृश्धातोःकर्तरिशप्रत्यये पाघ्राध्मास्थाम्नादाण्दृश्यर्तीतिसूत्रेणपश्यादेशेशब्विकरणेपररूपेचसतिपश्यइतिरूपंबोध्यं । यदारुक्मव
र्णंहेमवर्णविग्रहं रूपोपन्यासाच्चेतिसूत्रात् । युजिरुचितिजांकुश्चेत्युणादिसूत्रेणरुचेर्मक्प्रत्ययेकुत्वेचरुक्ममितिभवतीत्युज्वलदत्ता
दयः । अन्येतुचशब्दाद्भुजेरपिमक्प्रत्ययेकुत्वेचरुग्ममितिभवतीत्याहुः । अत्रचाध्यापकपाठानुसारेणव्यवस्थाज्ञेया । ब्रह्मयोनिं
हिरण्यगर्भकारणं । कर्तारं जगत्कर्तारं। ईशं विष्णुं। पश्यते। कर्तरिकर्मव्यतिहारइत्यात्मनेपदी । कर्मव्यतिहारोनामपरस्परकरणं



उप० । यदापश्यःपश्यतेरुक्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिं । तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैति ॥ ३ ॥
भा० । पुण्यंचानिष्टंविधूय ।

योग्यकरणंचेतिव्याख्यानात् । ततश्चयोग्यंपश्यतीत्यर्थः । तदाविद्वान्अपरोक्षज्ञानी पुण्यपापेविधूयनिरंजनोभवतीतियोज्यं । अत्रपुण्यपदेनअप्रारब्धमनभीष्टंचपुण्यंविवक्षितं । पापपदेनअप्रारब्धंपापमभिमतं । विधूननंचनाशः । निरंजनइत्यस्यज्ञानोत्तरानिष्टकर्मश्लेषरहितइत्यर्थः । तदुक्तं । तत्रटीकायां । निरंजनोनिर्लेपइति । एवंविद्वान् । परममाविर्भूतं । साम्यं स्वरूपसुखेन विष्णुसाम्यमुपैतीतियोज्यं । एवंचज्ञानेनाविद्यायांदग्धायां अशेषानिष्टनिवृत्तिर्भवति । बहुतरंचस्वरूपसुखमभिव्यज्यतइतिप्रमेयदीपिकोक्तज्ञानपूर्वोत्तराप्रारब्धाशेषानिष्टभोगाभावः बहुतरस्वरूपसुखाभिव्यक्तिश्चेतिफलद्वयं ज्ञानेनस्वाव्यवहितोत्तरक्षणएव भवतीत्यनेनमंत्रेणोच्यतइतिध्येयं ॥ ३ ॥ पूर्वमंत्रेब्रह्मापरोक्षज्ञानेनसंचितागामिकर्मणांनाशाश्लेषावुक्तौ । प्रारब्धकर्मणांतुभोगेनैवक्षयः । यथोक्तं । भोगेनत्वितरेक्षपयित्वेति । प्रारब्धभोगकालेचज्ञानीस्वविहितकर्मादिकंकरोतीत्याह ॥ प्राणोह्येषइति ॥ अत्रक्रियावानित्यावर्तनीयं । तथाचक्रियावान्कर्मवान् । प्रारब्धकर्मवानितियावत् । विद्वानपरोक्षज्ञानी । एषःप्रकृतोहरिरेव । सर्वभूतैःइंद्राद्यभिमानिसर्वदेवैः । प्राणः प्रकृष्टचेष्टकःसन्विभाति । सर्वजीवदेहेषुप्रकाशते । अतोनाहंस्वतंत्रकर्ताकिंतुहरिरेवेतिविजानन्सन् । अतिवादीअहमेवकर्तेत्याद्यतिवादयुक्तोनभवते । व्यत्ययेनात्मनेपदं । नभवति । किंत्वात्मक्रीडःआत्मनोभगवतःक्रीडासृष्ट्यादिक्रीडाध्येयत्वेनयस्यसआत्मक्रीडः । सृष्ट्यादिकर्तृत्वेनभगवद्ध्यानवान्भवतीतियावत् । एवंज्ञानीसंप्रज्ञातसमाधियुक्तोभवतीत्युक्त्वाकदाचिदसंप्रज्ञातसमाधियुक्तोपिभवतीत्याह ॥ आत्मरतिरिति ॥ आत्मदर्शननिमित्तारतिःस्वरूपसुखं

उप० । प्राणोह्येषसर्वभूतैर्विभातिविजानन्विद्वान्भवतेनातिवादी । आत्मक्रीडआत्मरतिःक्रियावानेषब्रह्मविदांवरिष्ठः ॥ ४ ॥

यस्यसः आत्मरतिः असंप्रज्ञातसमाधियुक्तोभवतीत्यर्थः। बाह्यार्थानुसंधानंयत्रनास्तिसएवासंप्रज्ञातसमाधिः। इतरस्तुसंप्रज्ञातसमाधिरितिविवेकः । यदात्वसंप्रज्ञातसमाधिर्नास्तितदासत्कर्माणिकरोतीत्याह ॥ **क्रियावानिति** ॥ भगवत्पूजात्मककर्मकर्तेत्यर्थः। नकेवलमेतावत् । किंतुभागवतशास्त्रव्याख्यानादिकर्मापिकरोतीत्याह ॥ **एषब्रह्मविदांवरिष्ठइति** ॥ एषः ब्रह्मापरोक्षज्ञानी ब्रह्मविदांस्वावरब्रह्मज्ञानिनां। वरिष्ठःउपदेशकतयाअतिशयेनवरः सच्छास्त्रोपदेष्टाभवतीत्यर्थः ॥४॥ एवंज्ञानिभिरपिकर्मादिकमनुष्ठीयतइत्युक्तं । तथानुष्ठानंलोकसंग्रहार्थमेवनतुफलार्थमितिमतनिरासायइदानींतत्फलमाह ॥ **सत्येनेति** ॥ अत्रनित्यमित्यस्य सत्येनेत्यादिनान्वयः । सत्येन । यत्सतांहितमत्यंतंतत्सत्यमितिकीर्तितमित्युक्तसत्यवचनेन । तपसा देवद्विजगुरुप्राज्ञपूजनमित्याद्युक्तत्रिविधतपसा। सम्यग्ज्ञानेन परिपक्वापरोक्षज्ञानेनच। ब्रह्मचर्येण। श्रवणादिरूपवेदाभ्यासेनच। आत्मास्वरूपभूतः। एषः तेयेशतंमानुषाआनंदाइत्यादिप्रमाणप्रमितःपूर्णानंदः । लभ्यःप्राप्यः । ज्ञानोत्तरंकृतनिष्कामकर्मणाश्रवणादिनाअपरोक्षज्ञानेनच यावत्स्वरूपानंदाविर्भावोभवतीत्यर्थः । एतच्चप्रमाणसिद्धमितिसूचयितुंहीत्युक्तं । तदुक्तं । सर्वदुःखनिवृत्तिश्चज्ञानिनोनिश्चितैव हि । उपासयाकर्मभिश्चभक्त्याचानंदचित्रतेति । ध्यानेनापरोक्षज्ञानंभवतीत्युक्तं । तस्यध्यानस्यसहकारिजातंवदन्नेवापरोक्षज्ञानंयदधिष्ठानेभवतितदपिसूचयति ॥ **सत्येनेति** ॥ क्षीणदोषाःयतयः श्रवणाद्यनुकूलप्रयत्नवंतः अंतःशरीरेशरीरमध्ये । यंपश्यंति । सएषःज्योतिर्मयःप्रचुरप्रकाशः शुभ्रःशुद्धःजडामिश्रः आत्माभगवान्। सत्येनसत्यवचनेन। तपसाकायिकवाचिकमानस ॥ ४३ ॥

उप० । सत्येनलभ्यस्तपसाह्येषआत्मासम्यग्ज्ञानेनब्रह्मचर्येणनित्यं । अंतश्शरीरेज्योतिर्मयोहिशुभ्रोयंपश्यंतियतयःक्षीणदोषाः ॥ ५ ॥

भेदात्रिविधेनतपसा । सम्यग्ज्ञानेनमाहात्म्यज्ञानेन । तत्सहितस्नेहरूपभक्त्येतियावत् । नित्यंब्रह्मचर्येणगुह्येंद्रियनियमनेन । यद्यपितपोग्रहणेनैवलब्धमेतत् । ब्रह्मचर्यमहिंसाचशारीरंतपउच्यतइत्युक्तेः। तथापिकुरुपांडवन्यायेनविशेषद्योतनार्थंपृथगुक्तिः। एवंसत्येनेत्यादावपिद्रष्टव्यं। लभ्यःसाक्षात्कर्तव्यइत्यर्थः। अत्रअंतश्शरीरइत्यनेनदेहमध्येब्रह्मदर्शनंभवतीतिसूचितं। क्षीणदोषाइत्यादिनातुरागद्वेषाद्यभावः । श्रवणादिकंनित्यनैमित्तिकंकर्मानुष्ठानंभक्त्यादिकंचसाक्षात्कारेजननीयेध्यानस्यसहकारीतिसूचितमितिज्ञातव्यं ॥ ५ ॥ फलाध्यायोक्तोमोक्षश्चतुर्विधः । कर्मक्षयः चरमदेहक्षयः मार्गो भोगश्चेति । तत्रक्षीयंतेचास्यकर्माणीत्यादिनाअपरोक्षज्ञानस्यकर्मक्षयफलकत्वमुक्तं । चरमदेहक्षयस्तुदेवानांस्वोत्तमप्रवेशेनभवतीतिवेदांतविज्ञानेतिमंत्रेसूचयिष्यते । देवव्यतिरिक्तज्ञानिनांतुविशिष्टोत्क्रमेणनचरमदेहक्षयोभवतीति तंनमस्यंत्येताःसूर्यस्यरश्मयइतिमंत्रेऽभिहितं । यथा चैतत्तथास्माभिर्व्याख्यातं । मार्गोपिद्विविधः । गरुडशेषमार्गोर्चिरादिमार्गश्चेति । तत्राद्योवेदांतविज्ञानइत्यत्रसूचयिष्यते । द्वितीयेनमार्गेणपरब्रह्मप्राप्तिंवक्तुमुत्तरोमंत्रः । तत्रज्ञानिनस्त्रिविधाः । संतस्तुत्रिविधाज्ञेयाउत्तमाधममध्यमाः । उत्तमादेवतास्तत्रऋष्याद्यामध्यमामताः । अधमामानुषोत्कृष्टास्तेचापित्रिविधामताइत्युक्तेः । तत्राप्रतीकालंबनाउत्तमाः । व्याप्तदर्शित्वात् । तेषांमध्येदेवव्यतिरिक्तानामुत्तमानामर्चिरादिमार्गेणगम्यंदर्शयति ॥ **सत्यमेवंजयतीति** ॥ तत्रान्यथाप्रती

उप० । सत्यमेवंजयतिनानृतंसत्येनपंथावितितोदेवयानः । येनाक्रमंत्यृषयोह्याप्तकामायत्रतत्सत्यस्यपरमंनिधानं ॥ ६ ॥

तिनिरासायसत्यानृतशब्दार्थप्रदर्शकंयत्रसत्यस्यपरमंनिधानमित्येतद्व्याख्यानरूपंचप्रमाणंपठति ॥ सत्योहीति ॥ विष्णुनामको
प्यपभ्रष्टदेवोस्ति । तस्यापिब्रह्मादिवद्यज्ञभागभोक्तृत्वात् । यज्ञभागभोक्तॄणांचापभ्रष्टतदितरभेदेनद्वैविध्यस्यान्यत्रोक्तत्वात्तद्व्या
वृत्त्यर्थंभगवानित्युक्तं । विशेष्यावधारणार्थंविष्णुरित्युक्तमित्याहुः । निधानमिति । निधीयतेअत्रइत्यधिकरणेल्युट् सन्निधानाधि
करणमित्यर्थः । अत्रमंत्रेसत्यमित्येतत्वैकुंठलोकस्थमितिविशेषणीयं । यत्रतत्सत्यस्येतिवाक्यशेषानुरोधात् । एवमित्यस्यभग
वज्ज्ञानेनेत्यर्थः । ऋषयइत्येवोक्तेमध्यमज्ञानिनामृषीणांप्रतीतिःस्यात्तन्निवृत्त्यर्थंआप्तकामाइत्युक्तं । काम्यतइतिकामः । महाज्ञा
नं । तल्लक्षणं नित्यशोभगवद्रूपस्यापरोक्ष्येणदर्शनं । मुहूर्तमात्रज्ञानंस्यान्महाज्ञानंततोधिकमित्यन्यत्रोक्तं । तथाचाप्तकामाःआप्तः
काम्योमहाज्ञानंयैस्तेआप्तकामाः । मध्यमज्ञानिनस्तुऋषयोनमहाज्ञानवंतः । किंतूक्तलक्षणकज्ञानवंतएव । ब्रह्मलोकगंतृत्वात् ।
तस्यचोक्तलक्षणज्ञानसाध्यत्वात् । यथोक्तं । ज्ञानेनब्रह्मलोकःस्यादिति । तावत्येवोक्तेदेवानांप्रतीतिःस्यात् तदर्थंऋषयइत्युक्तं ।
अप्रतीकादेवताहिऋषीणांशतमेवच । राज्ञांचशतमुद्दिष्टंगंधर्वाणांशतंतथा । एतेधिकारिणोव्याप्तदर्शिनोन्येनतुक्कचिदितिप्रमा
णोक्ताःप्रत्येकंशतसंख्याकऋषि राज गंधर्वाःऋषिपदेनोपलक्षणयाग्राह्याः । तेषांचास्त्येवात्रोच्यमानंवैकुंठस्थविष्णुगंतृत्वं । महा
ज्ञानाद्धरेर्गतिरिति । अप्रतीकाश्रयायेहितेयांतिहरिमेवत्विति च ॥ ततश्चायंमंत्रार्थः ॥ यत्रलोके सत्यस्यविष्णोः परमंनिधानं ॥ ४४ ॥
प्राकट्येनसन्निधानंतत्वैकुंठलोकं । तत्स्थंपरंब्रह्मेतियावत् । आप्तकामाःआप्तमहाज्ञानाःऋषयःप्रत्येकंशतसंख्याकाःऋषि राज गं

भा० । सत्योहिभगवान्विष्णुःसद्गुणत्वात्प्रकीर्तितः । असुरास्तद्विरुद्धत्वादनृताःपरिकीर्तिताः । तस्यविष्णोर्निधानंतुवैकुंठोलोकउत्तमइतिच ।

धर्वाः । येनदेवयानेनपथाआक्रमंतिगच्छंतिसदेवयानःदेवयानसंज्ञिकाःपंथाअर्चिरादिमार्गोयेनसत्येनविततःस्वप्राप्त्यर्थंनिर्मितः तंसत्यंविष्णुं । वैकुंठलोकस्थमितिशेषः । तेनन चतुर्थपादोक्तवैयर्थ्यं । देवयानेनेतिशेषः । प्रकृतत्वात् । एवं भगवदपरोक्षज्ञाने न जयतिप्राप्नोति । आधुनिकोप्यप्रतीकालंबनइतिशेषः । नत्वनृतमसुरंप्राप्नोतीति । ज्ञानस्यनानिष्टफलकत्वमितिदर्शयितुमिद मुक्तं । विष्णुनामकापभ्रष्टदेवव्यावृत्त्यर्थमिदमुक्तमित्यप्याहुः । अत्रदेवयाननामकार्चिरादिमार्गेणभगवंतंप्राप्नोतीत्यर्थेमानमुच्य ते । उत्क्रांतस्तुशरीरात्स्वाद्गच्छत्यर्चिषमेवतु । ततोहिवायोःपुत्रंचयोसौनाम्नातिवाहिकः । ततोहःपूर्वपक्षंचाप्युदक्संवत्सरंतथा । तटितंवरुणंचैवप्रजापंसूर्यमेवच । सोमंवैश्वानरंचेंद्रंध्रुवंदेवींदिवंतथा । ततोवायुंपरंप्राप्यतेनैतिपुरुषोत्तममिति ॥ ६ ॥ ननुसत्यमे वमित्यत्रब्रह्मापरोक्षज्ञानेनपरब्रह्मप्राप्तिरुक्ता । संप्राप्यैनमितिवक्ष्यमाणमंत्रेचकार्यब्रह्मप्राप्तिरुच्यते । ग्रंथांतरेचमहरादिलोकप्रा प्तिः । तत्कथं । अपरोक्षज्ञानस्यावैचित्र्येणतत्कार्यवैचित्र्यायोगात् इत्याशंक्यअपरोक्षज्ञानमपिविषयभेदाद्विचित्रमेव अतोनोक्त दोषइतिभावेनविषयभेदंवदन्नेवमोक्षहेत्वपरोक्षज्ञानविषयमप्याह ॥ बृहच्चेति ॥ अत्रसुदूरेतदिहांतिकेचेत्येतद्विरुद्धमित्यतस्तद्व्या चष्टे ॥ सर्वगत्वादिति ॥ ततश्चदूरेअंतिकेचेत्यनेनसर्वगतमित्युच्यते । अतोनविरोधइतिभावः । बृहच्चेतिमंत्रे परिपश्यं तिधीराः आनंदरूपंपश्यति रुग्मवर्णकर्तारमित्याद्युक्तविशेषणसमुच्चयार्थश्चशब्दः । एवमग्रेपि । ननुपरममहत्त्व मध्यममह

उप० । बृहच्चतद्दिव्यमचिंत्यरूपंसूक्ष्माच्चतत्सूक्ष्मतरंविभाति । दूरात्सुदूरेतदिहांतिकेचपश्यत्स्विहैवनिहितंगुहायां ॥ ७ ॥

भा० । सर्वगत्वात्तद्दूरेंतिकेच ।

आथर्व० त्त्व परमाणुत्वानि  कथमेकस्यैवब्रह्मणउच्यंतेविरोधादित्याशंक्याचिंत्यशक्तिबलेनोक्तपरिमाणत्रययोगित्वान्नविरोधइतिभावेनो उमर्जी०
॥ ४५ ॥ क्तंअचिंत्यरूपमिति । अचिंत्यंरूपंशक्तिर्यस्यतत्अचिंत्यरूपमित्यर्थः ॥ तदयंमंत्रार्थः ॥ अचिंत्यरूपंदिव्यमलौकिकं ।
बृहत्मध्यमपरिमाणोपेतं । परममहत्त्वस्योत्तरत्रवक्ष्यमाणत्वात्तदग्रहः । चशब्दात्आनंदरूपत्वादिपूर्वोक्तविशेषणविशिष्टं । ५।७
तदेवंरूपंपरंब्रह्म । विभातिप्रकाशते । मनुष्योत्तमानामितिशेषः । तेषामेव मानुषाएवबहिःप्रकाशाइत्यत्रदृष्टचैवह्यवताराणा
मितिस्मृत्यनुसारेणावतारदर्शित्वरूपबहिःप्रकाशत्वाभिधानादिति । सूक्ष्मात्सूक्ष्मतरं । चशब्दात्पूर्वोक्तविशेषणविशिष्टंच । तत्
बिंबरूपंब्रह्मेतियावत् । विभातिप्रकाशते । ऋष्याद्यधिकारिणामितिशेषः । ऋषयोंतःप्रकाशाइतितेषामेवबिंबदर्शित्वाव्यतिरिक्तांत
दर्शितोक्त्याऋष्यादिमध्यमाधिकारिणामंतर्दर्शित्वमवगम्यते । तेनऋषिपदंमध्यमाधिकारिणामुपलक्षणं । अतःऋषयइतिश्रुत्या
सिद्धिरिति । दूरात्सुदूरे अत्यंतदूरे । इहमध्येअंतिकेचस्थितं । सर्वगतमितियावत् । चशब्दात्पूर्वोक्तविशेषणविशिष्टंच । तत्
व्याप्तंब्रह्मविभाति । अप्रतीकालंबनानामितिशेषः । अप्रतीकालंबनस्वरूपंतेषांव्याप्तब्रह्मरूपदर्शनंच अप्रतीकादेवताहीत्यादिस्मृ
तिसिद्धं । साचस्मृतिःपूर्वमंत्रव्याख्यानावसरेउदाहृतेति । एवमुत्तममध्यमाधमाधिकारिणामपरोक्षज्ञानविषयादर्शिताः । इदा
नींतेषांसर्वेषामपिकालांतरेजायमानंयद्ब्रह्मापरोक्षज्ञानंतद्विषयमाह ॥ पश्यत्स्विति ॥ सर्वेषुज्ञानिषुस्वस्वयोग्यंरूपंपश्यत्सुसत्स्वे
वइहस्वदेहे । गुहायांहृदयगुहायांनिहितंस्वबिंबरूपमितिशेषः ॥ विभातीति ॥ सर्वेषांज्ञानिनांस्वबिंबरूपदर्शनंच नसामान्याद ॥ ४५ ॥
प्युपलब्धेरितिसूत्रखंडसिद्धं । तत्वप्रकाशिकायांनभगवद्रूपाणांसाम्येनसामान्यतोदर्शनेनसर्वेषांमुक्तिः । किंनामस्वदर्शनादेवेतित

स्यव्याख्यातत्वादिति । अत्रज्ञानिनांवैचित्र्यमेवोक्तंनतत्वस्यज्ञानिनोऽनेनज्ञानेनैतल्लोकप्राप्तिरिति । तन्मानांतरेणज्ञातव्यं । तथा
हि । महरादिवैकुंठांताःलोकास्तावज्ज्ञानप्राप्याः । ईयुस्त्रीन्कर्मणालोकान्ज्ञानेनैवतदुत्तरानितिस्मृतेः । तत्राप्रतीकालंबनानांव्या
प्तभगवद्रूपदर्शनेनवैकुंठस्थब्रह्मप्राप्तिः । अप्रतीकाश्रयायेहितेयांतिहरिमेवत्वितिस्मृतेः । ऋष्यादिमध्यमाधिकारिणस्तुबिंबरूप
ब्रह्मदर्शनेनहिरण्यगर्भलोकेयांति । स्वदेहेब्रह्मदृष्ट्वैवगच्छेद्ब्रह्मसलोकतामित्युक्तेः । अधमाधिकारिणोमनुष्योत्तमास्त्रिविधाः । अ
धमामानुषश्रेष्ठास्तेचापित्रिविधामताइत्युक्तेः । त्रिविधानांतेषामवतारदर्शनमपित्रिविधं । पादयोगोयोगस्तपश्चेति । तेनत्रिविधेन
अवतारदर्शनेनतेषांमहरादिलोकप्राप्तिः । पादयोगान्महर्लोकोजनलोकस्तुयोगतः । तपसस्तुतपोलोकःप्राप्यतेनान्यथाक्वचिदि
तिस्मृतेः । त्रिविधानामपितेषामधिकारिणांस्वबिंबदर्शनेनमोक्षोभवति । समोपिभगवान्स्वबिंबदर्शनएवैनंमोचयतीतिश्रुतेः ।
स्वबिंबदर्शनएवेत्यवधारणेनसर्वेषामपिबिंबदर्शनादेवमोक्षइत्यवगम्यते । एतेनाशेषानिष्टनिवृत्तिसहितास्वरूपेणव्यवस्थितिरेवमो
क्षः । मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थितिरित्युक्तेः । तेननविचित्रोमोक्षः । निवृत्तौवास्वरूपेणव्यवस्थितौवावैचित्र्याभावा
त्अपरोक्षज्ञानानितुविचित्राणीत्युपपादितं । अतस्तैर्ज्ञानैरविचित्रोमोक्षःकथंस्यात् । सामग्रीवैचित्र्येकार्यवैचित्र्यनियमादितिनि
रस्तं । उक्तैर्विचित्रैर्ज्ञानैर्वैकुंठादिप्राप्तिरूपविचित्रफलंभवति । अत्रविचित्रेणस्वबिंबदर्शनेनविचित्रोमोक्षोभवतीत्युक्तत्वात् । अ
तएवसूत्रभाष्येसामान्यदर्शनाल्लोकामुक्तिर्योग्यात्मदर्शनादित्युक्तं । तदिदंबिंबदर्शनंहिरण्यगर्भोपदेशजन्यं । सएतस्माज्जीवघना
त्परात्परंपुरिशयंपुरुषमीक्षतइतिश्रुतेः । तत्वप्रकाशिकायांजीवघनादित्यस्यजीवोत्तमहिरण्यगर्भोपदेशादितिव्याख्यातत्वेनप्रकृत

सिद्धिः । किंचस्वबिंबदर्शनस्यब्रह्मोपदेशजन्यत्वंमोक्षजनकत्वंच तमक्रतुःपश्यतिवीतशोकोधातुःप्रसादान्महिमानमात्मनइति काठकश्रुतिसिद्धं । तस्यायमर्थः । अकारोब्रह्मवाची । अःइतिब्रह्मेतिश्रुतेः । क्रतुशब्दोज्ञानवाची । क्रतुर्मतिर्मनीषेत्युक्तेः । अविषयःक्रतुर्यस्येतिबहुव्रीहिः । धातुःप्रसादादित्यत्रप्रसादपूर्वकोपदेशादित्यर्थः । उपदेशोब्रह्मणस्तुसर्वेषामेवमुक्तयइतिब्रह्मोपदेशस्योक्तत्वात् । तथाचअक्रतुःब्रह्मापरोक्षज्ञानी । धातुर्हिरण्यगर्भस्य प्रसादात्तत्पूर्वकोपदेशात् । तंआत्मास्यजंतोर्निहितोगुहायामितिपूर्वोक्तस्वबिंबरूपंभगवंतंपश्यति । तेनदर्शनेनवीतशोकःअशेषानिष्टनिवृत्तिमान्भवतीति । चतुर्मुखप्रसादजन्यबिंबदर्शनं चऋषीणांबिंबदर्शनवत्सूक्ष्मात्सूक्ष्मतरत्वप्रकारकंनभवति । किंतुजीवापेक्षयामहत्तरगुणपरिमाणयुक्तत्वप्रकारकमितिदर्शयितुंआत्मनोमहिमानमित्युक्तं । अस्यतमित्यनेनान्वयः । आत्मशब्दोजीवार्थः । महिमन्शब्दश्चाश्वकर्णादिशब्दवद्रूढ्यामहत्तरगुणपरिमाणयुक्तार्थवाची । काठकभाष्येजीवाद्गुणपरीमाणंयस्माद्विष्णोर्महत्तरं ॥ तस्माज्जीवात्समहिमाविष्णुरित्युच्यतेबुधैरितिमहिमन्शब्दार्थस्योक्तत्वात् । तथाचात्मनोजीवात्महिमानंमहत्तरगुणपरिमाणयुक्तंतुबिंबरूपंविष्णुंपश्यतीतियोजना । एतेनऋष्यादिमध्यमाधिकारिणांसूक्ष्मतरत्वप्रकारकाबिंबदर्शनसद्भावेप्युक्ताबिंबदर्शनाभावात् । चतुर्मुखप्रसादजन्यमुक्तस्वबिंबदर्शनंमोक्षार्थमावश्यकमेव । तेनसर्वाधिकारिणांस्वबिंबदर्शनादेवमोक्षइतियदुक्तंतद्युक्तमेवेति ॥ ७ ॥ यदपरोक्षज्ञानंकर्मक्षयादिसाधनमुक्तंतदपरोक्षज्ञानंप्रतिभगवत्प्रसादएवमुख्यहेतुः । प्राक् तद्विज्ञानेनपरिपश्यंतीत्यत्रतत्कारणत्वेनोक्तध्यानंतन्निमित्तमात्रमितिभा

वेनाह ॥ नचक्षुषेति ॥ नान्यैर्देवैरित्यत्रगृह्यतइत्यस्यअनुकर्षेअन्यदेवकर्तृकविष्णुकर्मकज्ञानाभावःप्रतीयते । तत्प्रकृतानुपयुक्त मित्यतस्तद्वाक्यमन्यथाव्याचष्टे ॥ नान्यैर्देवैरिति ॥ वक्ष्यमाणब्रह्मविष्णुभिन्नदेवप्रसादेनेत्यर्थः । ज्ञानरूपेणेत्यादिनोक्तप्रसन्न रूपत्वंनैकप्रकारमितिदर्शयितुंपरमेतिविशेषणं । तत्रमुख्यप्राणाधिष्ठानेविष्णोरभिव्यज्यमानत्वात्तत्प्रसादोपेक्षितः । ब्रह्मोपदेशे नमोक्षहेतुस्वबिंबापरोक्षज्ञानंभवति । सएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुषमीक्षतइतिश्रुतेः । अतस्तत्प्रसादोपिहेतुरित्युक्त मितिज्ञेयं । प्रसन्नेनैवेत्येवशब्देनमंत्रेतुशब्दोवधारणार्थइतिसूचितं । तेनवाय्वादिप्रसादस्यैवमुख्यहेतुत्वं ध्यानस्यतुनिमित्तत्वमा त्रमितिसूचितं । तत्किमपरोक्षज्ञानंप्रति अन्यदेवानांसर्वथानुपयोगएव । तथात्वेअथदेवान्नमेज्जुहुयादितिदेवनमस्कारादिविधि रयुक्तःस्यात् । वैयर्थ्यादित्यतआह ॥ अन्येनुज्ञाप्रदायिनइति ॥ अनुपूर्वात्ज्ञाधातोरातश्चोपसर्गइतिसूत्रेणभावेऽङ्प्रत्ययः । अनुकूलंज्ञानमनुज्ञा । तथाचान्येदेवाःइंद्रियादिप्रेरकत्वेनभगवदपरोक्षज्ञानानुकूलज्ञानोत्पादकाइत्यर्थः । तेनदेवान्नमेदित्यादि विध्यनुपपत्तिर्नास्ति । भगवदपरोक्षज्ञानफलकश्रवणादिज्ञानहेतुत्वेनदेवनमनादेःसार्थक्यादितिभावः । अर्थांतरप्रतीतिनि रासायनिष्कलशब्दंव्याचष्टे ॥ षोडशेति ॥ सजीवस्यशरीरस्यभागाःकलाः । ताश्चषोडश । मुख्यप्राणाभिमन्यमा नो जीवः । आस्तिक्यनिष्ठारूपा श्रद्धा । खंवायुर्ज्योतिरापःपृथिवींद्रियंमनोऽन्नंवीर्यंतपोमंत्राःऋगादिवेदरूपाः । पुण्यपाप

उप० । नचक्षुषागृह्यतेनापिवाचानान्यैर्देवैस्तपसाकर्मणावा । ज्ञानप्रसादेनविशुद्धसत्वस्ततस्तुतंपश्यतेनिष्कलंध्यायमानः ॥ ८ ॥

भा० । नान्यैर्देवैर्हरिंपश्येज्ज्ञानरूपेणवायुना । ब्रह्मणापरमज्ञानरूपेणहरिणातथा । प्रसन्नेनैवतंपश्येदन्येऽनुज्ञाप्रदायिनइतिच । षोडशकलाशरीरोनभवतीतिनिष्कलः ।

रूपंकर्म । गोलकाः देवदत्तादिरूपंनामइति । तत्रजीवस्यसजीवशरीरभागत्वंप्रसिद्धमेव । श्रद्धायाःशरीरभागत्वंशरीरांतर्गतवृत्तिरूपत्वात् । आकाशादिपंचभूतानांशरीरोपादानत्वात्तद्भागत्वं । चक्षुरादींद्रियस्यशरीरप्रवृत्त्युपकरणत्वात्तद्भागत्वं । मनसःप्रधानोपकरणत्वात्तत्वं । अन्नस्यशरीरस्थितिकारणत्वात्तत्वं । वीर्यस्यशरीरहेतुत्वात्तत्वं । तपसोजीवंप्रतिज्ञानादिहेतुतयामुख्यकारणत्वात्तत्वं । मंत्राणांसम्यग्ज्ञानादिहेतुतयातत्वं । कर्मणःसुखादिनिमित्तत्वात्तत्वं । गोलकानामिंद्रियाश्रयत्वात्तत्वं । नाम्नस्तुशरीरे संकेतितत्वात्तत्वं । तदेवंयाःषोडशकलाःतद्युक्तशरीरोनभवतीतिभगवान्निष्कलइत्युच्यतइत्यर्थः । ननुसौंदर्याद्यभावएवनिष्कलशब्दार्थोस्तु । यद्वाकरचरणात्मकंशरीरंकलोच्यते । तद्रहितंनिष्कलमितिपरेणव्याख्यातत्वाच्छरीरमात्राभावएवतदर्थोस्तु । पिंडजशरीरराहित्यार्थकत्वांगीकारेणेत्यतआह ॥ यदेति ॥ रुग्मवर्णमितिसौंदर्यस्योक्तत्वात्तदभावोननिष्कलशब्दार्थः । नापिशरीरमात्राभावस्तदर्थः । आनंदरूपमितिआनंदात्मककरचरणादिमत्त्वस्योक्तत्वादित्यर्थः । नचानंदरूपपदेनकथमानंदात्मककरचरणादिमत्त्वंलभ्यतइतिवाच्यं । रूपंस्वभावेसौंदर्येआकारेश्लोकशब्दयोरितिनानार्थकोशानुसारेणरूपशब्दस्याकारवाचकत्वेनतदुपपत्तेः । अतएवस्वगुणात्मकंरूपमित्युस्यशिरःपाणिपादात्मकमिष्यतइत्यनुव्याख्यानेआनंदाद्यात्मकशिरःपाण्यादिलक्षणंरूपंभगवतोभिहितमिति ॥ ततश्चायंमंत्रार्थः ॥ मनएवब्रह्मापरोक्षज्ञानेकरणमितिवक्तुंकरणांतरंप्रतिक्षिपति ॥ नचक्षुषेति ॥ चक्षुषाकरणेनब्रह्मनगृह्यतेनदृश्यते तर्हिंशब्दादेवापरोक्षधीरितिमतदर्शनात् । आगमेनदृश्यतेकिं नेत्याह ॥ नापिवाचेति ॥ गृ

भा० । यदापश्यःपश्यतेरुक्मवर्णं । आनंदरूपममृतंयद्विभातीत्युक्तत्वात् ।



ह्यतइत्यनेनान्वयः । आगमस्यापरोक्षज्ञानजननस्वाभाव्याभावादितिभावः ॥ नान्यैर्देवैरिति ॥ ततइतिश्रवणाद्यतइतिग्राह्यं । यतःतपसा कायिकादित्रिविधतपसा । कर्मणा यज्ञादिकर्मणा । वाशब्दश्चशब्दार्थः । विशुद्धसत्वः शुद्धांतःकरणः । ध्यायमानः ध्यानंकुर्वन् । अधिकारी । निष्कलंषोडशकलायुक्तशरीररहितं । अन्यैर्देवैःअन्यदेवताप्रसादेननपश्यति । ततःज्ञानप्रसादेनज्ञानरूपस्यवायोश्चतुर्मुखस्यचपरमज्ञानरूपस्यहरेश्च । तुशब्दोवधारणे । प्रसादेनतुप्रसादेनैवपश्यते । योग्यकारणरूपेकर्मव्यतिहारेआत्मनेपदमेतत् । स्वयोग्यदर्शनंकरोतीत्यर्थः ॥ ८ ॥ ननुनचक्षुषागृह्यतेनापिवाचेतिकरणनिषेधःकृतः । तर्हिकेनेंद्रियेणपरमात्मासाक्षात्कर्तव्यइत्यतआह ॥ एषोणुरिति ॥ उपलक्षणमेतत् । मध्यमपरिमाणोव्याप्तश्चेत्यपिग्राह्यं । तथाचाणुःमध्यमपरिमाणःव्याप्तश्च । एषःनिष्कलःआत्मापरमात्मा । चेतसावेदितव्यःसाक्षात्कर्तव्यइत्यर्थः । ननुयन्मनसानमनुतइतिहरेर्मनोग्राह्यत्वनिषेधात्कथंचेतसावेदितव्यइत्युक्तमित्यतआह ॥ यस्मिन्विशुद्धइति ॥ यस्मिंश्चेतसिविशुद्धेरागादिदोषरहितेसति । एषःआत्माजीवःविभवतिब्रह्मश्रवणादिविविधव्यापारवान्भवति । तेनचेतसेत्यन्वयः । तथाचयन्मनसेतिश्रुतेर्दुष्टमनोविषयत्वान्नतद्विरोधः । अतएवोक्तमन्यत्र । मनसातुविशुद्धेनेतीतिभावः । किंचमुख्यप्राणाननुगृहीतमनोविषयाश्रुतिः । तदनुगृहीतमनसातुभगवान्साक्षात्कर्तुंशक्यतएवेतिभावेनाह ॥ प्राणैरिति ॥ सर्वं मनोबुद्धिरहंकारश्चित्तंचेतनमेवचेतिपंचधाभिन्नंप्रजानां चित्तंप्राणैःप्राणापानादिभिरोतंप्रविष्टं । एतदेवविवृणोति । प्राणोमुख्यवायुः । पंचधा प्राणापानादिपंचरूपेण । यस्मिन्पंचविधे

उप० । एषोणुरात्माचेतसावेदितव्योयस्मिन्प्राणःपंचधासंविवेश । प्राणैश्चित्तंसर्वमोतंप्रजानांयस्मिन्विशुद्धेविभवत्येषआत्मा ॥ ९ ॥

मनसिसंविवेशसम्यक्विवेश । परब्रह्मापरोक्षज्ञानानुकूलसंकल्पनिश्चयादिशक्त्याधायकत्वेनप्रविष्टःतेनचेतसेत्यन्वयः । तथाचप्राणापानादिरूपोमुख्यप्राणःमुखनासिकादिस्थानस्थितोपिचेतसि । प्रविश्यब्रह्मापरोक्षज्ञानानुकूलशक्त्याधायकोभवति । तद्बलाच्चेतोब्रह्मापरोक्षज्ञानंजनयति । सहजशक्त्यातुमनोब्रह्मापरोक्षज्ञानजनकंनभवतीत्येवंपरा श्रुतिरितिभावः ॥ ९ ॥ भगवदपरोक्षज्ञानेनकर्मक्षयादिकंभवतीत्युक्तं । नकेवलमेतावत् । किंतुस्वर्गादिसकलपुरुषर्थावाप्तिः अभीष्टसकलभोगश्चभवतीत्याह ॥ यंयमिति ॥ विशुद्धसत्वोभगवदपरोक्षज्ञानीयंयंलोकंस्वर्गादिकंमनसासंविभातिविषयीकरोति । इच्छतीतियावत् । यांश्चकामान्काम्यंतइतिकामाःविषयाःतान्कामयते । तंतंतांस्तान्कामांश्च । जयतेप्राप्नोति । तस्मादमोघसंकल्पत्वात् । भूतिकामःपुरुषः आत्मज्ञंभगवदपरोक्षज्ञानिनं । अर्चयेत् । प्रसन्नस्यभगवदपरोक्षज्ञानिनःभूतिप्रदानसामर्थ्यात् । तत्प्रसादार्थंभूतिकामेनतत्पूजाकार्येत्यर्थः ॥ १० ॥ **इतिपंचमःखंडः** ॥ ५ ॥ आत्मज्ञार्चनेनभूतिर्भवतीत्युक्तं । साचभूतिर्नाणिमाद्यैश्वर्यं । अल्पफलत्वात् । किंतुप्राणस्थब्रह्मोपासनजन्यतत्स्थब्रह्मसाक्षात्कारद्वारामोक्षप्राप्तिरेव । महापुरुषार्थत्वादितिभावेनाह ॥ **सवेदेति** ॥ अत्रमंत्रे यत्रेतिसप्तम्यंतेनयदुच्यतेतदेवसइत्यनेनपरामृश्यतइतिप्रतीतिंनिवारयति ॥ **सआत्मज्ञार्चकइति** ॥ ब्रह्मधामेत्येतत्पदद्वयंब्रह्म

---

उप० । यंयंलोकंमनसासंविभातिविशुद्धसत्त्वःकामयतेयांश्चकामान् । तंतंलोकंजयतेतांश्चकामांस्तस्मादात्मज्ञंह्यर्चयेद्भूतिकामः ॥ १० ॥ सवेदैतत्परमंब्रह्मधामयत्रविश्वंनिहितंभातिशुभ्रं । उपासतेपुरुषंयेह्यकामास्तेशुक्रमेतदतिवर्ततिधीराः ॥ १ ॥

भा० । सआत्मज्ञार्चकोब्रह्मणोधामप्राणंवेद ।

रूपंतेजइत्यर्थकमित्यन्यथाप्रतीतिनिरासायाह ॥ **ब्रह्मणोधामप्राणमिति** ॥ अनेनब्रह्मधामेत्येकंपदं । ब्रह्मणोधामेतिसमासः धामपदंगृहार्थकं । तस्यवेदेत्यनेनान्वयइत्युक्तंभवति । प्राणस्यब्रह्मधामत्वमुपपादयितुंयत्रविश्वमित्याद्युक्तं । तत्रविश्वशब्दस्यप्र सिद्धार्थकताप्रतीतिनिरासायार्थंदर्शयति ॥ **विश्वंपूर्णमिति** ॥ विश्वंसमस्तंपूर्णंचेत्यभिधानादितिभावः । यत्रेत्यस्यनिहितमित्य नेनान्वयंदर्शयितुंयत्रेत्यस्यानुवादः । ब्रह्मेतिविशेष्यमध्याहृतं । यत्रनिहितमित्यन्वयः । यत्रप्राणेनिहितंस्थितंसज्जगद्धारयतीतिशे षः । यथोक्तं । वाक्प्राणमध्यगोनित्यंधारयत्यखिलंहरिरिति । यत्रेत्यस्यैतदितिपूर्वेणान्वयः । तथाचयतःप्राणेस्थित्वा जगद्धारकंब्रह्मअतःप्राणोब्रह्मधामेत्युक्तंभवति । ननुवैकुंठादिकंपरित्यज्यप्राणएवब्रह्मधामपदेनकुतोग्राह्यइत्यतोऽत्रार्थेप्रमा णमाह ॥ **प्रधानंधामेति** ॥ परममित्यस्यार्थः प्रधानमिति । तथाचवैकुंठादेरप्रधानत्वान्मुख्यप्राणस्यैवमुख्यधाम त्वात्परमविशेषणबलेनब्रह्मधामपदेनप्राणएवगृह्यतइतिभावः । अनेनएतैरुपायैर्यततेयस्तुविद्वान्तस्यैषआत्माविशतेब्रह्मधामे तिवक्ष्यमाणमंत्रगतोब्रह्मधामशब्दोप्युक्तार्थः । तच्छ्रुतिव्याख्यानन्यायेनैवसवेदैतदितिमंत्रोव्याख्यातव्यइतिभावेनसमग्रमं त्रार्थव्याख्यानरूपंप्रमाणंपठति ॥ **उपायैरिति** ॥ श्रवणाद्युपायैरित्यर्थः । अनेनएतैरुपायैर्यततइत्यस्ययोविद्वान्श्रव णादिभिर्ब्रह्मसाक्षात्कारार्थंयततइत्यर्थउक्तः । तस्यप्राणइत्युत्तरार्द्धेनतस्यैषआत्माविशतेब्रह्मधामेतिवाक्यंव्याख्यातं । नि त्यमित्यस्यव्याख्यानंध्रुवमिति । नियमेनेत्यर्थः । ननुहरिस्तस्यप्राणआविष्टोभवतीतिकथं । मुख्यप्राणेहरिप्रवेशस्यनि

भा० । यत्रविश्वंपूर्णंब्रह्मनिहितं । प्रधानंधामविष्णोस्तुप्राणएवप्रकीर्तितः । उपायैर्योविजानीयात्प्राणस्थंपरमेश्वरं । तस्यप्राणेहरिर्नित्यमाविष्टोभवतिध्रुवं ।

त्यसिद्धत्वादित्याशंक्यविवक्षितंहरेःप्राणप्रवेशशब्दार्थंदर्शयति ॥ **नित्यंप्राणेस्थितस्येति** ॥ आद्यएवकारोपिशब्दार्थः । द्वितीयस्तुज्ञानदीपनमेवेत्यन्वेति । तथाचनित्यंप्राणस्थस्यापिविष्णोः । प्राणद्वारेण प्राणप्रसादद्वारेण । तदुक्तं । ज्ञानरूपेणवायुना ॥ प्रसन्नेनैवतंपश्येदिति । प्रसन्नमुख्यप्राणाधिष्ठानेनेतियावत् । ज्ञानिनःप्राणस्थब्रह्मोपासकस्यसदायज्ज्ञानदीपनं अपरोक्षज्ञानोत्पत्तिः तदभिवृद्धिश्च तदेवावेशः । नतुप्रसिद्धः । अतोनित्यंप्रविष्टस्यविष्णोःपुनस्तत्रप्रवेशोक्तिर्नानुपपन्नेत्यर्थः । पूर्वंप्रविष्टस्यापिपुनःप्रवेशोक्तिःपारिभाषिकप्रवेशाभिप्रायेणेत्यर्थंदृष्टांतेनोपपादयति ॥ **सन्निधानमिति** ॥ यथापिशाचाःपुरुषेषु सन्निधानंप्राप्ताअपि तत्रपुरुषेषुस्थित्वाभुंजंतोपिमंत्रादिभिर्मंत्रौषधादिभिर्निमित्तैःपुनश्चपुनरप्याविशेयुः आविशंतीत्युच्यंतेअतिवक्तृत्वादिव्यापारवशात् तथाविष्णुःसर्वदाप्राणेस्थितोपिसन्प्राणाधिष्ठानेज्ञानिनोज्ञानदीप्त्यादिकं उत्पन्नस्यज्ञानस्याधिकविषयत्वंदीप्तिः । आदिपदेनानुत्पन्नस्योत्पत्तिर्ग्राह्या । तथाचज्ञानिनःउपासकस्यज्ञानोत्पत्तिंतदभिवृद्धिंचपुनःपुनःकुर्यादेवंकुर्वंश्चमुख्यप्राणाविष्टइत्युच्यतइतियोजना । एतच्छुक्रंशोकरहितंअतिक्रम्यवर्ततइत्यन्यथाप्रतीतिंनिवारयति ॥ **एतदिति** ॥ शुक्रंप्रतीत्यस्य वर्ततइत्यनेनान्वयः । एतच्चवृक्षंप्रतिविद्योततेविद्युदितिवद्योज्यं । तथाचशुक्रंब्रह्मयत्रास्तितत्रवर्ततइत्यर्थः ॥ **अन्यदतीति**॥

भा० । नित्यंप्राणेस्थितस्यैवविष्णोरावेशएवहि । प्राणद्वारेणयज्ज्ञानदीपनंज्ञानिनःसदा । सन्निधानंयथाप्राप्ताःपिशाचाःपुरुषेष्वपि । तत्रस्थित्वापिभुंजंतआविशेयुः पुनश्चते । मंत्रादिभिस्तथाविष्णुःसदाप्राणस्थितोपिसन् । ज्ञानदीप्त्यादिकंकुर्याज्ज्ञानिनःपुनरेवत्वितिच । एतच्छुक्रंप्रतिअन्यदातिवर्तते । सर्वंतीर्त्वाहरिंशुक्रंप्रतिवृत्तिर्भवेत्पुनः । ज्ञानिनः



अन्यत्कर्मादिकंअतिअतिक्रम्यविनाश्येतियावत् । प्रतीतएवार्थःकिंनस्यादित्याशंकांनिराकुर्वन्स्वोक्तार्थेप्रमाणमाह ॥ **सर्वंतीर्त्वेति** ॥ कर्मादिकंतीर्त्वेत्यर्थः । अनेनान्यदतिक्रम्येतिप्रमापितं । शुक्रंशोकरहितं । शुक्रंतच्छोकराहित्यादित्युक्तेः । हरिंप्रतिज्ञानिनःपुनर्वृत्तिःपुनःपुनःस्थितिर्भवेदितियोजना । अनेनशुक्रंप्रतिवर्ततइत्येतत्प्रमापितं । ननुहरिंप्रतिवृत्तिःकथंपुरुषार्थःनित्यसिद्धत्वादित्यतआह ॥ **साहीति** ॥ सा क्षीराब्ध्यादौहरिणासहवृत्तिरेवमुक्तिः । सालोक्यादिरूपामुक्तिःस्यात्हि यस्मात्तस्मात्हरिंप्रतिवृत्तिःपुरुषार्थएव । तादृश्याःहरिंप्रतिवृत्तेःसर्वैरपिप्रार्थनीयत्वादितिभावः । तेशुक्रमेतदतिवर्ततीत्यस्यप्रतीतार्थएवकिंनस्यादित्यतआह ॥ **तन्नैवेति** ॥ तस्यशुक्रमितिशोकराहित्यावगमात् । कश्चनतन्नैवातिक्रम्यवर्ततइत्यर्थः ॥ **तदयंमंत्रार्थः** ॥ वक्ष्यमाणहिशब्दस्यात्राकर्षः । सचहेत्वर्थः । यस्माद्विश्वंपूर्णं ब्रह्म । यत्रप्राणे । निहितं स्थितंसज्जगद्धारयति । यस्माच्चब्रह्मप्राणाधिष्ठानेभातिप्रकाशते तस्मात्सःप्राणएवपरमंवैकुंठाद्यपेक्षयाप्रधानं । ब्रह्मधामविष्णोर्गृहं । अतःसःआत्मज्ञार्चकः । प्रथमंब्रह्मणोधामप्राणंवेद । अनंतरंचएतत्प्राणस्थंब्रह्मवेदश्रवणाद्युपायैर्जानाति । ततोब्रह्मतस्यप्राणाधिष्ठानेभातिआविर्भवति । ततोब्रह्म शुभ्रंमोक्षरूपशुभप्रदंभवतीत्यर्थः । अनेनात्मज्ञार्चकस्यप्राणस्थब्रह्मोपासनादिमोक्षांतभूतिरुक्ताभवतीतिबोध्यं । नकेवलमात्मज्ञार्चकस्यैवैषाभूतिः किंतुप्राणस्थब्रह्मोपासकानांसर्वेषामपिभवतीतिभावेनाह ॥ **उपासतइति** ॥ अकामाः कामादिदोषरहिताःयेअधिकारिणः । पुरुषंपूर्णषड्गुणंप्राणस्थंविष्णुमुपासते । शृण्वंतिमन्वतेध्यायंतिच । तेधीराःमुख्यप्राणाधिष्ठानेब्रह्मापरोक्षज्ञानिनो भूत्वेति

भा० । साहिमुक्तिःस्यात्तन्नैवात्येतिकश्चनेतिमहावाराहे ।

शेषः । अन्यत् अविद्यादिकं । अतिअतिक्रम्य । शुक्रंशोकरहितं । एतत्ब्रह्मप्रतिवर्तते । तेषां विष्णुसालोक्यादिमुक्तिरूपा हरिं प्रति वृत्तिर्भवेदित्यर्थः । पूर्वंतत्रतत्रोपासनादिकमुक्तं । अत्रतत्सर्वंसंगृह्योच्यतइतिवा । पूर्वंब्रह्मोपासनादिकमेवोक्तं । अत्रतुप्राणस्थ ब्रह्मोपासनादिकमुक्त्वातस्यपूर्वोक्तंतदधिकंचफलमुच्यतइतिवापूर्वोत्तरयोर्भेदइति ॥ १ ॥ प्रागविद्यादिबंधनिवृत्तिरपरोक्षज्ञानेन भवतीत्याह ॥ **कामानिति** ॥ यःकामान्विषयान् भद्रान्मन्यमानःसन्कामयते । सकामभिः बहुलंछंदसीतिभिसऐस्त्वाभावः । कामैर्निमित्तैस्तत्रतत्रनानायोनिषुजायते । एवंकामस्यबंधकत्वमुक्त्वाइदानींतन्निवृत्तिप्रकारमाह ॥ **पर्याप्तकामस्येति** ॥ पर्याप्तः मोक्षार्थपर्याप्तः । कामोभगवद्भक्त्यादिकामोयस्यसतथा । तस्यविषयकामनात्यागवतः । चशब्दोविषयसमुच्चये । एवंभूतस्य ज्ञानिनःसर्वेकामाःमोक्षप्रतिबंधकीभूतकामाःइहैवापरोक्षज्ञानजन्मन्येवप्रविलीयंति प्रविलीयंते । अपरोक्षज्ञानजन्मन्येवप्रविली यंतइत्युक्त्याअपरोक्षज्ञानादेवसर्वकामप्रविलयइत्युक्तंवेदितव्यं ॥ २ ॥ पूर्वंज्ञानप्रसादेनेत्यादिनाअपरोक्षज्ञानंप्रतिविष्णुप्रसाद स्यैवमुख्यहेतुत्वमित्युक्तं । इदानींविष्णुभक्तेरपिअपरोक्षज्ञानंप्रतिमुख्यहेतुत्वमस्तीतिभावेनाह ॥ **नायमात्मेति** ॥ अधिकारि निष्ठसाधनेषुभक्तेःप्राधान्यमिहाभिप्रेतं । विष्णुप्रसादस्तुनाधिकारिनिष्ठःअतःप्राक्तत्प्राधान्यस्योक्तत्वेपिनतद्विरोधइतिध्येयं । अयमात्माविष्णुःप्रवचनेनसच्छास्त्रव्याख्यानेन । नलभ्यःनज्ञेयः । मेधया । धीर्धारणावतीमेधेतिकोशात् धारणावत्याबुद्ध्या ।



---

उप० । कामान्यःकामयतेमन्यमानःसकामभिर्जायतेतत्रतत्र । पर्याप्तकामस्यकृतात्मनश्चइहैवसर्वेप्रविलीयंतिकामाः ॥ २ ॥ नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन । यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वां ॥ ३ ॥

मननेनध्यानेनचेतियावत् । बहुना विपुलेन । श्रुतेनश्रवणेन । अत्रश्रवणादीनांज्ञानकारणत्वनिषेधःप्राधान्याभिप्रायेण । नतु सर्वथा । तथात्वेश्रवणादिविध्यनुपपत्तिरित्यवगंतव्यं । तर्हिअपरोक्षज्ञानंप्रतिकिंप्रधानंकारणमित्यतआह ॥ **यमेवेति** ॥ एषःपरमात्मायंवृणुतेभक्तत्वेनस्वीकरोति । तेनैवलभ्यःज्ञेयः । तदेवविवृणोति ॥ **तस्येति** ॥ भक्तस्येत्यर्थः । एषःआत्मास्वांतनुंस्वस्वरूपंविवृणुतेप्रकाशयति । भगवान्भक्तस्यअपरोक्षज्ञानविषयोभवतीत्यर्थः ॥ ३ ॥ भक्तिरेवसाक्षात्कारहेतुः नतुश्रवणादिकमितियदुक्तंतत् भक्तेरधिकारिनिष्ठसाधनेषुश्रवणाद्यपेक्षयाप्राधान्याभिप्रायेण । नतुश्रवणादीनांसाक्षात्कारजनकत्वंनास्तीत्यभिप्रेत्येतिभावेनश्रवणादीनामन्वयव्यतिरेकाभ्यांब्रह्मदर्शनहेतुत्वंप्रतिपादयन्नेववाय्वधिष्ठानेब्रह्मसाक्षात्कारोभवतीत्याह ॥ **नायमात्माबलहीनेनेति** ॥ अयमात्माविष्णुःबलहीनेनश्रवणमननध्यानबलहीनेन । नलभ्योनद्रष्टव्यः । प्रमादात्अनवधानात् । प्रमादोनवधानतेत्यमरः । विष्णुभक्तिरूपावधानाभावादितियावत् । नचलभ्यइत्यन्वयः ॥ **तपसोवाप्यलिंगादिति** ॥ वाशब्दश्चशब्दार्थः । तेननलभ्यइत्यस्यात्राप्यनुकर्षः । लिंगपदेनतपसःसात्विकत्वज्ञापकंपरमश्रद्धादिकंविवक्षितं । तथाचश्रद्धयापरयातप्तंतपस्तत्रिविधंनरैः । अफलाकांक्षिभिर्युक्तैःसात्विकंतत्प्रचक्षतइतिगीतोक्ततपसःसात्विकत्वापादकपरमश्रद्धाफलेच्छाविरहविष्णुविषयकमनोयोगरूपं यत्तपसःसात्विकत्वेलिंगंतद्रहितात्तपसोपि देवद्विजगुरुप्राज्ञपूजनमित्यादित्रिविधतपसोपिविष्णुर्नद्रष्टव्यइत्यर्थः । किंतुयोविद्वान्श्रवणादिनाब्रह्मसाक्षात्कारोनभवतीतिजानन् । एतैःपूर्वोक्तैःश्रवणादिभिःतपोंतैरुपायैर्दर्शनार्थंयत

उप० । नायमात्माबलहीनेनलभ्योनचप्रमादात्तपसोवाप्यलिंगात् । एतैरुपायैर्यततेयस्तुविद्वांस्तस्यैषआत्माविशतेब्रह्मधाम ॥ ४ ॥

ते तस्यपुरुषस्यार्थे तैःप्रसन्नइतिशेषः । एषःआत्मा परमात्मा ब्रह्मधाम वायुं। विशतेतत्रतस्याविर्भवतीतितत्वप्रकाशिकायामुक्तं। उपायैर्यैर्विजानीयादिति भाष्यरीत्यातुविशतेमुख्यप्राणाधिष्ठानेस्वसाक्षात्कारंजनयति । उत्पन्नंचस्वसाक्षात्कारंवर्धयतीतियोज्यं ॥४॥ प्राक्सत्यमेवंजयतीतिमंत्रेअप्रतीकालंबनानांवैकुंठस्थंविष्णुरूपंगम्यमुक्तं। इदानींप्रतीकालंबनानांब्रह्मांडांतर्गम्यंवदन्नेवब्रह्मांडाद्बहिःसर्वेषामपिज्ञानिनांगम्यमाह॥ संप्राप्येति॥अत्रमंत्रेसर्वतइत्यस्यान्वयंदर्शयन्व्याचष्टे॥सर्वतोदेहादेःमुक्तास्संतइति॥ देहशब्देनचरमदेहोग्राह्यः । आदिपदेनकर्मबंधकामाविद्याश्चग्राह्याः।मुक्ताइत्येकदेशोत्कीर्तनेनमुक्तात्मानइतिसमग्रंग्राह्यं। धीराइत्यनेनदेवानांप्राप्तौ तद्व्यावृत्त्यर्थंदेहादेर्मुक्तात्मानइतिव्याख्यातं। देवानांतुपरांतेचरमदेहक्षयः। नतुततःपूर्वमितितद्व्यावृत्तिः। अनेन एकगुणोपासकानामपिसंग्रहः।तेषांविशिष्टोत्क्रमणाभावेपिप्रबलरोगादिनादेहेक्षीणेसतिदेहान्मुक्तत्वात् । कर्मादिबंधमुक्तत्वाच्च। नचात्र तेसर्वगमितितच्छब्देनवैकुंठपर्यंतमागतानामेवज्ञानिनांपरामर्शः । एकगुणोपासकानांतुनवैकुंठपर्यंतमागमनं । अतःकथंतच्छब्देनतत्परामर्शइतिवाच्यं । अर्चिरादिपथावायुंप्राप्यतेनजनार्दनं । यांत्युत्तमानरोच्चाद्याब्रह्मलोकात्सहामुनेत्यणुभाष्येमनुष्योत्तमादीनांअर्चिरादिमार्गेणकार्यब्रह्मप्राप्तेःतेनसहाकार्यब्रह्मप्राप्तेश्चोक्तत्वेनैकगुणोपासकानामपिवैकुंठपर्यंतगमनसद्भावात्। नचाणुभाष्येनरोच्चपदेनकथमेकगुणोपासकानांग्रहणमितिवाच्यं। तेषामपिमनुष्योत्तमत्वात् । केचित्तुमानुषाःमुक्तिमनुक्रम्यैवदेहतइतिवचनबलेनविशिष्टोत्क्रमणशून्यानामेकगुणोपासकानांमनुष्योत्तमत्वावगमात् । नचाणुभाष्येनरोच्चपदेनएकगुणोपासकभिन्नाए

उप० । संप्राप्यैनमृषयोज्ञानतृप्ताःकृतात्मानोवीतरागाःप्रशांताः । तेसर्वगंसर्वतःप्राप्यधीरामुक्तात्मानःसर्वमेवापियंति ॥ ५ ॥ भा० । सर्वतोदेहादेःमुक्तास्संतः ।



वमनुष्योत्तमाग्राह्याइतिवाच्यं । एकगुणोपासकानामर्चिरादिमार्गादिकंनास्तीतिविशेषवचनाभावेनसर्वेषामपिमनुष्योत्तमानांनरोच्चपदेनग्राह्यत्वात् । अपवादाभावेउत्सर्गस्यस्थितिरितिन्यायात् । अत्रैवचस्थितिस्तेषामितिवचनंतुभोगार्थंनत्वत्रैवस्थितिरित्येवंपरं। केचित्तुमानुषाइत्युपक्रम्यदृष्ट्वाविष्णुमनुज्ञया।पुनरत्रैवतिष्ठंतिनित्यानंदैकभोगिनउत्युक्तत्वात्। तस्माद्देहादेर्मुक्ताइतिविशेषणेन एकगुणोपासकग्रहणेनाकिंचिद्बाधकं । अन्यथाएकगुणोपासकानांपृथिव्याद्यावरणगतभगवत्प्रवेशाभावेनअंतिमावरणांतस्थितविरजानदीस्नानाभावेनलिंगभंगाद्ययोगादितिध्येयं।सर्वगंप्राप्यसर्वमेवापियंतीतिपदानांव्यवहितत्वादन्वयंदर्शयन्नेवकिंचिद्व्याचष्टे॥ सर्वगमित्यादिना ॥अत्रपृथिव्याद्यव्यक्तांततत्वगतमितिसर्वगमित्यस्यार्थोबोध्यः। भगवंतमितिभाष्यमध्याहृतं। तमेवेत्यनेनसर्वमित्यस्यानंतरंतमित्यध्याहृत्यतस्यैवशब्दान्वयइतिसूचितं। ब्रह्मणासहेतिशेषःकर्तव्यः। ततश्च ब्रह्मणासह सर्वं । विश्वंसमस्तंपूर्णंचसर्वमित्यभिधीयतइतिवचनात्पूर्णं ।तंसर्वगं पृथिव्यादिसर्वतत्वगतंभगवंतमेवापियंति प्रविशंतीत्यर्थः ।तदुक्तं। ज्ञानिनःप्रलयेसर्वंब्रह्मणासहपार्थिवं । परमात्मानमाविश्यवारिस्थंतत्समाहिताः । अग्निस्थंपरमात्मानंतद्युताश्चैववायुगं । नभोगतंतेननीताःमनस्स्थंतद्युतास्तथा। ततोबुद्धिस्थमीशेशंततोहंकारगंहरिं । ततोविज्ञाननामानंमहत्तत्वगतंहरिं । ततआनंदनामानमव्यक्तस्थंजनार्दनं । प्राप्यनावृत्तिमायांतिशांतिभूतानिरामयाइति ॥ सर्वतोदेहादेर्मुक्ताइत्याद्युक्तव्याख्यानेप्रमाणमाह ॥ देहादेरिति ॥ सर्वगमिति ॥ पृथिव्यादिसर्वतत्वगतमित्यर्थः ॥ मोदंतेंतर्बहिस्तथेति ॥ अनेनयदाब्रह्मांडांतस्स्थोज्ञानिवर्गःपृथिव्याद्याव

भा० । सर्वगंभगवंतंप्राप्यतमेवापियंति । देहादेस्सर्वतोमुक्ताःसर्वगंपुरुषोत्तमं । प्राप्यतस्मिन्प्रविश्याथमोदंतेंतर्बहिस्तथेतिच ।

रणगतंभगवंतंप्रविशतितदातद्भगवद्देहांतःतद्बहिर्वाआनंदमनुभवतीतिसूचितं । संप्राप्यैनमितिमंत्रेएनमित्यस्यवायुमित्यर्थः ।
ब्रह्मधामेतितस्यैवप्रकृतत्वात् । ततश्चैनमित्यस्यब्रह्माणमित्यर्थःपर्यवस्यति । मुक्तिप्रसंगेवायुवाचिशब्देनब्रह्माग्राह्यइत्यनु
व्याख्यानोक्तेः । एवंचएनंब्रह्माणंसंप्राप्यज्ञानतृप्ताइतिसंयोज्यं । अत्रतृप्ताइत्यनेनेदंसूचितं । पूर्वंयथायोगंअवताराद्यपरो
क्षयुक्ताःनतुस्वबिंबदर्शनयुक्ताः । अतस्तेतृप्ताःनभवंति । हिरण्यगर्भप्राप्त्यनंतरंतुतदुपदेशेनमोक्षजनकंयत्स्वबिंबापरोक्षज्ञानंतेन
तृप्ताइति । ततश्चएनंसंप्राप्यज्ञानतृप्ताइत्यस्यहिरण्यगर्भंप्राप्यतदुपदेशेनस्वबिंबापरोक्षज्ञानपूर्णाइत्यर्थः । हिरण्यगर्भोपदेशेनस्व
बिंबापरोक्षज्ञानंचश्रुत्यादिसिद्धं । सएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुषमीक्षतइतिश्रुतौबिंबापरोक्षज्ञानस्यविशेषाकारे
णब्रह्मोपदेशजन्यत्वाभिधानात् । प्रणवेनहरिंध्यायन्ब्रह्मलोकंसमेत्यच । ज्ञानंचतुर्मुखात्प्राप्येतिस्मृतौ ब्रह्माणमस्मान्मति
माप्येत्यनुव्याख्यानसंवादलाभात् । इत्थंचऋषयइत्यनेनऋष्याद्याःमनुष्योत्तमांताःप्रतीकालंबनाग्राह्याः । तैरेवचतुर्मुखस्यप्रा
प्यत्वात् । तथाचश्रुतिः । सप्रतीकाश्चतुर्मुखं । अप्रतीकाःपरमुहैतेगच्छंतीति । ननुऋष्याद्याःक्षितिपांताःमध्यमाधिकारिणएव
प्रतीकालंबनाः । अंतःप्रकाशत्वात् । यथोक्तं । प्रतीकंदेहउद्दिष्टोयेषांतत्रैवदर्शनं । नतुव्याप्ततयाक्कापिप्रतीकालंबनास्तुतइति ।
मनुष्योत्तमास्तुबहिःप्रकाशाः । मानुषाएवबहिःप्रकाशाइतिश्रुतेः । अतस्ते नप्रतीकालंबनाइतिचेत् । उच्यते । ऋष्यादीनांम
ध्यमज्ञानिनांप्रतीकालंबनत्वंप्रतीकंदेहइत्यादिसूत्रभाष्यसिद्धं । मनुष्योत्तमास्तुप्रतिमालंबनाः । तेषांप्रतीकालंबनत्वंतु प्रतीकंदे
हादिकंतद्गतमेवयेनराः । उपासतइत्यनुव्याख्यानसिद्धं । तत्रादिपदेनप्रतिमांगृहीत्वातस्याःप्रतीकत्वाभिधानत्वात् । ततश्चप्रती

कालंबनाःद्विविधाः । देहालंबनाः प्रतिमालंबनाश्चेत्यभिप्रायेणमनुष्योत्तमानामपिप्रतीकालंबनत्वोक्तौनकश्चिद्दोषइति । ननुत
थापिमनुष्योत्तमानांचतुर्मुखप्राप्तिर्नयुज्यते । प्रतिमालंबनत्वात् । देहालंबनानामेवचतुर्मुखप्राप्तेः । यथोक्तं । स्वदेहेब्रह्मदृष्ट्वैवग
च्छेद्ब्रह्मसलोकतामिति । सत्यं । तथापिप्रतिमालंबनानामपिचतुर्मुखप्राप्तिरस्त्येव । तदुक्तं । प्रतीकंदेहादिकंतद्गतमेवयेनराः ।
उपासतेतेपुरतःसमाप्नुयुर्ब्रह्माणमिति । नचैवंस्वदेहेब्रह्मदृष्ट्वैवेत्यवधारणविरोधः । देहालंबनाःअर्चिरादिमार्गेणगत्वालोकांतरे
स्थितिमकृत्वैवचतुर्मुखंप्राप्नुवंतीत्यभिप्रायेणावधारणोपपत्तेः । प्रतिमालंबनास्तुनैवं । किंतुमहरादिलोकेस्थित्वाकालांतरेचतुर्मुखं
प्राप्नुवंति । एतच्चतेब्रह्मलोकेष्वितिमंत्रव्याख्यानावसरेस्फुटीकरिष्यामः । नचैवमपिपुरतःसमाप्नुयुर्ब्रह्माणमित्यनुव्याख्यानंकथं
घटते । देहालंबनानांपूर्वंब्रह्मप्राप्तावपिप्रतिमालंबनानांमहरादिलोकेस्थित्यनंतरमेवचतुर्मुखप्राप्तिरितिवाच्यं । वैकुंठस्थविष्णुप्रा
प्तिमपेक्ष्यानुव्याख्यानेपूर्वचतुर्मुखप्राप्तिरुक्तेत्यलं ॥ ततश्चायंमंत्रार्थः ॥ वैराग्यतोभक्तिदार्ढ्येतेनोपासायदाभवेत् । अपरोक्ष
तयाविष्णोरित्यनुव्याख्यानानुसारेणवीतरागाइत्यादिकंयोज्यं । ते वीतरागाः । अतएवप्रशांताःभक्तिदार्ढ्योपेताइतियावत् ।
ततएवकृतात्मानःश्रवणमननध्यानविषयीकृतपरमात्मानः । तेनैवहेतुनाज्ञानतृप्ताःयथायोगंबिंबापरोक्षज्ञानेनावतारापरोक्षज्ञाने
नचयुक्ताः । ऋषयःऋषिचिरपितृदेवगंधर्वमनुष्यगंधर्वक्षितिपमनुष्योत्तमाः । एनंवायुं । ब्रह्मधामेतिप्रकृतत्वात् । चतुर्मुखमिति
तुपरमार्थः । संप्राप्यतदुपदेशेनज्ञानतृप्ताःस्वबिंबापरोक्षज्ञानपूर्णाःभवंतीतिशेषः । अत्रायंविवेकः । ज्ञानिनस्त्रिविधाः । उत्तम
मध्यमाधमभेदात् । तत्राप्रतीकालंबनाउत्तमाः व्याप्तदर्शित्वात् । तेषांगम्यं सत्यमेवमितिमंत्रेअभिहितं । प्रतीकालंबनाःद्विवि

धाः । देहालंबनाः प्रतिमालंबनाश्चेति । तत्रऋष्याद्याःक्षितिपांताःमध्यमज्ञानिनोदेहालंबनाः देहांतर्दर्शित्वात् । अधमज्ञानिनो मनुष्योत्तमास्तुप्रतिमालंबनाः । देहाद्बहिःप्रतिमासुअवतारदर्शित्वात् । तत्रदेहालंबनाःअर्चिरादिमार्गेणसत्यलोकस्थब्रह्माणं प्राप्यतदुपदेशेनज्ञानतृप्ताःभवंति । स्वबिंबापरोक्षज्ञानपूर्णाभवंति । मनुष्योत्तमाअपित्रिविधाः । उत्तममध्यमाधमभेदात् । यथोक्तं । अधमामानुषोत्कृष्टास्तेचापित्रिविधामताइति । तत्रोत्तमाःमानुषोत्कृष्टाः सदैवाखंडितध्यानंतपइत्युच्यतेबुधैः । अपरोक्षदृशायुक्तंनित्यंषण्मात्रकालया । इत्युक्तलक्षणतपोनामकसाधनेनतपोलोकंगच्छंति । तपसस्तुतपोलोकःप्राप्यतेनान्यथाक्वचिदित्युक्तेः । मध्यमामानुषोत्कृष्टा अपरोक्षदृशानित्यमेकमात्रायुजायुतं । योगनाम्नासमुद्दिष्टंध्यानंनित्यमखंडितमित्युक्तलक्षणयोगाख्यसाधनेनजनलोकंगच्छंति । जनलोकस्तुयोगतइत्युक्तेः । अधमामानुषोत्कृष्टास्तु । तच्चतुर्भागयानित्यमपरोक्षदृशायुतं । पादयोगाख्यमुद्दिष्टंध्यानंनित्यमखंडितमित्युक्तलक्षणपादयोगाख्यसाधनेनमहर्लोकंगच्छंति । पादयोगान्महर्लोकइत्युक्तेः । एवं त्रिविधाअपिमनुष्योत्तमाःमहरादिलोकत्रयंगत्वाकालांतरेसत्यलोकंप्राप्यतत्रब्रह्मोपदेशेनज्ञानतृप्ताःभवंतीति । तदनेनमंत्रार्धेनदेहालंबनप्रतिमालंबनभेदेनद्विविधानांप्रतीकालंबनानांब्रह्मांडांतःप्राप्यमुक्तं । इदानींप्रतीकालंबनानामप्रतीकालंबनानांचब्रह्मांडाद्बहिर्गम्यंभगवद्रूपमाह ॥ तेसर्वगमिति ॥ येवैकुंठलोकंप्राप्ताःअप्रतीकालंबनाः । येचसाक्षाल्लोकांतरगमनद्वारेणवासत्यलोकं प्राप्ताःतेसर्वेपिसर्वतोदेहादेश्वरमदेहात्कर्मबंधात्कामबंधाच्चमुक्तात्मानः । अनेनविशेषणेनदेवव्यावृत्तिः । तेषामधुनापिचरमदेहसद्भावात् । धीराःज्ञानिनः । सर्वगं पृथिव्यादिगुणत्रयांततत्वांतर्गतंभगवंतंप्राप्य सर्वपूर्णपृथिव्यादिरूपंभगवंतमेवापियंतिप्रविशंति । प्रविश्यचतदंतस्तद्बहिर्वामोदंतइत्यपिग्राह्यं । तेनज्ञानिनांप्रकृतिबंधनिवृत्तेःप्रागपिसुखभोगोस्तीतिसूचितं । सालोक्यादिमोक्षानंतरंविशेषाकारेणभोगइतिज्ञातव्यं ॥ ५ ॥ ननुत्रिविधमनुष्योत्तमरूपाःप्रतिमालंबनाःयथायथंमहरादिलोकंगच्छंति । देहालंबनास्तुसत्यलोकं । तत्रकिंतेप्रतिमालंबनादयःस्वगम्यंलोकंप्राप्यतत्रकतिपयकालेस्थित्वाब्रह्मांडाद्बहिर्गच्छंति उतमहरादिगमनानंतरंक्वाप्यस्थित्वाऽविलंबेनैवगच्छंति । किंचगुणत्रयगतभगवत्प्राप्त्यनंतरंज्ञानिनांकिंभवतीतितत्राह ॥ वेदांतेति ॥ अत्रमंत्रे ब्रह्मलोकेषुपरामृतात्परिमुच्यंतीत्यन्वयःप्रतीयते । —— अंतिमावरणानंतरस्थितविरजानदीस्नानेनपुंनामकब्रह्मणासहप्रकृतिबंधमोक्षस्यप्रमितत्वादित्यतोऽपेक्षिताध्याहारपूर्वकंतद्वाक्यंयोजयति ॥ ब्रह्मलोकेष्वित्यादिनामुच्यंतीत्यंतेन ॥ अत्रब्रह्मलोकेषुस्थित्वेत्यनेनाद्यप्रश्नस्योत्तरमुक्तं । द्वितीयस्योत्तरलाभप्रकारंवक्ष्यामः । तत्रब्रह्मलोकेष्वित्यस्यविष्णुलोकेष्वित्यर्थकत्वाद्वैकुंठसत्यतपोजनमहर्लोकेष्वित्यर्थः । एतेषांलोकानांविष्णुलोकत्वंच ददौलोकान्वैष्णवानितिभारततात्पर्यनिर्णयसिद्धं ॥ परांतकालइति ॥ परं ब्रह्मवर्षशतं । तस्याष्टधाविभक्तस्यअंतःकालःसार्धद्वादशवर्षरूपः तत्रेत्यर्थः । परीतिपृथक्पदंपरित्यज्येत्यर्थकं । अत्रमहर्लोकादिकमित्युपस्कर्तव्यं । तथाच परांतकालेमहर्लोकादिकंपरित्यज्येत्यर्थः । इतःपरमुत्तरोत्तरंअव्यक्ततत्वगतभगवत्प्राप्त्यर्थं पुंनामकब्रह्मणासहविरजानदीस्नानेनेतिशेषः। अनेनद्वितीयस्योत्तरंलब्धं । मुच्यंतीतिपरस्मैपदंछांदसं। मुच्यंते । अस्यपरामृतादि

उप० । वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्त्वाः । तेब्रह्मलोकेषुपरांतकालेपरामृतात्परिमुच्यंतिसर्वे ॥ ६ ॥
भा० । ब्रह्मलोकेषुस्थित्वापरांतकालेपरिमुच्यंति ।

त्यनेनान्वयः । परामृतादित्यस्यनित्यमुक्तलक्ष्म्यभिमन्यमानप्रकृतिबंधादित्यर्थः । न्यायविवरणोक्तेपरानृतादितिशाखांतरस्थपाठे प्रकृतिबंधादित्यर्थःस्फुटएव । तथाहि । प्रकृतिप्राकृतंअनृतंपरिणाममाहुः। प्रकृतिप्राकृतंप्रोक्तमितिस्मृतेः । तत्रप्राकृतवारणायपरे तिविशेषणं । तेनपरानृतादित्यस्यप्रकृतिबंधादित्यर्थकत्वात्तदनुसारेणपरामृतादित्यस्यापिसएवार्थइत्यवगंतव्यं । एतच्चोपलक्षणं । लिंगदेहान्मुच्यंतइत्यपिग्राह्यं । इदंशरीरंनिहत्यअविद्यांगमयित्वाअन्यन्नवतरंकल्याणतरंरूपंतनुतइतिश्रुत्यंतरेप्रकृतिरूपावि द्यायाःलिंगशरीरस्यचसहैवनिवृत्त्यभिधानादितिध्येयं ॥ ततश्चाथमंत्रार्थः ॥ येयतयोनिर्जितेंद्रियसमूहाः । येनिर्जितेंद्रियग्रा मायतिनोयतयश्चतेइतिकोशात् । संन्यासयोगात् फलकामनादित्यागःसंन्यासः । भगवदर्पणबुद्ध्यास्ववर्णाश्रमोचितकर्मानुष्ठानं योगः । मध्यमपदलोपीचात्रसमासः । ततश्चसंन्यासपूर्वकाद्योगात् । शुद्धसत्त्वाः शुद्धांतःकरणाः । कर्मणाशुद्धसत्त्वस्येतिस्मृ तेः । अतएववेदांतविज्ञानसुनिश्चितार्थाः । अंतोनिर्णयः । वेदांतःसर्ववेदार्थनिर्णयः । श्रवणमितियावत् । तज्जन्यंविज्ञानं मननंध्यानंच । तेनसुनिश्चितोपरोक्षीकृतोऽर्थःपरतत्वंयैस्तेतथा । तेसर्वेअप्रतीकालंबनादयः । ब्रह्मलोकेषुवैकुंठादिमहर्लोकांत लोकेषुस्थित्वाकतिपयकालेउषित्वा। परांतकाले परस्यब्राह्मवर्षशतस्यांतकालेअंतिमकाले वर्षशतस्याष्टधाविभागेकृतेयोंतिमभागः सार्धद्वादशरूपःतस्मिन्कालइतियावत् । महरादिलोकमितिशेषः । परिपरित्यज्य । इतःपरमव्यक्ततत्वपर्यंतंगत्वा । वर्षशत समाप्तौपुंनामकब्रह्मणासहविरजानदीस्नानेनेतिशेषः । परामृतान्नित्यमुक्तलक्ष्म्यभिमन्यमानप्रकृतिबंधात् । स्वमतेविद्याविरोधि त्वेनप्रकृतेरेवाविद्याबंधादितिपरमार्थः । इदमुपलक्षणं । लिंगदेहाच्चेत्यपिग्राह्यं । मुच्यंतिमुच्यंते । अत्यंतमुक्ताःभवंतीति । अत्रा

यंविवेकः। प्रतिमालंबनाःचरमदेहक्षयानंतरंअर्चिरादिमार्गेणमहरादिलोकत्रयंगत्वातत्रप्रलयपर्यंतंस्थित्वासंकर्षणमुखाग्निनाभूम्यादिदाहेसतिमहरादिलोकंपरित्यज्यसत्यलोकंगच्छंति।तदुक्तं। अथोअनंतस्यमुखानलेनदंदह्यमानंसनिरीक्ष्यविश्वं। निर्यातिसिद्धेश्वरजुष्टधिष्ण्यंयद्द्वैपरार्धंतदुपारमेष्ठ्यमिति। तदनंतरंप्रतिमालंबनाःब्रह्मोपदेशेनज्ञानतृप्ताःभवंति। ततस्सत्यलोकंप्रागेवप्राप्ताःदेहालंबनाः इदानींप्राप्ताःप्रतिमालंबनाश्चेतिद्विविधप्रतीकालंबनाः महरादिदाहारंभेजातेसत्यलोकस्थब्रह्मणासहसत्यलोकंपरित्यज्यवैकुंठलोकस्थंहरिंयांति। तदुक्तं। ॐकार्यात्ययेतदध्यक्षेणसहातःपरमभिधानादिति। तदानृसिंहरूपोहरिःब्रह्मादिदेहान्भित्वातदंगैरलंकृतस्सन्नृत्यति। यथोक्तं। तेषामन्यास्तनूर्हरिः। नृसिंहरूपीभगवान्भित्वाताभिरलंकृतः। नृत्यतेप्रलयेदेवइति। ब्रह्मचर्मशिरःपट्टीदिक्पालोर्ध्वांगभूषणः। द्वादशार्कशिरोदामरुद्रशीर्षैकनूपुरः। नृत्यतेप्रलयेदेवइतिच। एवंचतुर्मुखदेहनाशेसतिविराड्ब्रह्मणाएकीभवति। तदाप्रलयात्प्रागेववैकुंठंप्राप्ताःअप्रतीकालंबनाःप्रलयेवैकुंठंप्राप्ताःप्रतीकालंबनाश्चवैकुंठंपरित्यज्यविराड्ब्रह्मणासहब्रह्मांडाद्बहिर्निर्गत्यपृथिव्याद्यव्यक्तांततत्वगतपरमात्मानंक्रमेणप्रविश्यतमपिअतिक्रामंति। तंदुक्तं। विधेर्देहापगमनेलिंगमात्रशरीरकाः। पूर्णसाधनसंपन्नाअपरोक्षदृशश्चये। निर्गत्यचोर्ध्ववैकुंठादतीत्यावरणानिचेति। तदाविराड्ब्रह्मामहत्तत्वाभिमानिब्रह्मणासहएकीभवति। सचपुंनामकब्रह्मणा। ततःअव्यक्ततत्वगतंपरमात्मानमतिक्रांताःपूर्वोक्तज्ञानिनःपुंनामकब्रह्मणासहविरजानदीस्नानेनालिंगदेहात्प्रकृतिबंधाच्चात्यंतंविमुक्ताभवंति। यथोक्तं। विरजायांकृतस्नानाब्रह्मणासहसर्वशः। त्यक्तलिंगास्ततःसर्वेस्वरूपेणव्यवस्थिताइति। तथापिप्रकृतेर्बंधोब्रह्मणासहभिद्यतइतिच। प्रकृतिबंधश्चलिंगदेहाद्भिन्नएव। प्रकृतिंस्वात्मसंश्लिष्टांगुणान्स

त्वादिकानपि । कर्माणिसूक्ष्मदेहंचजायमानाहरेद्देशिः । दहेदितिस्मृतौप्रकृतिबंधसूक्ष्मदेहयोःपृथगभिधानादितिध्येयं । एवंदेवव्य
तिरिक्तानांसर्वज्ञानिनांयेनक्रमेणात्यंतिकप्रकृतिबंधनिवृत्तिर्लिंगदेहभंगश्चभवति । एतत्सर्वमुक्तं । इदानींदेवानांयेनक्रमेणप्रकृतिबं
धनिवृत्त्यादिकंभवति । तदपिदर्शयितुंवेदांतविज्ञानेत्ययमेवमंत्रोव्याख्यायते । अत्रपूर्वार्धव्याख्यानंप्राग्वत् । उत्तरार्धेपूर्वमंत्रात्सर्व
गंप्राप्येत्येतदनुवर्तनीयं ॥ तदयंमंत्रार्थः ॥ ब्रह्मलोकेषुवैकुंठादिलोकेषुस्थित्वावेदांतविज्ञानेत्यादिपूर्वार्धोक्तसंन्यासयोगश्रवणादि
कंकुर्वाणाःयेदेवाःतेसर्वेपरांतकालेब्राह्मवर्षशतांतिमाष्टमभागेब्रह्मांडांतःस्वर्गादिलोकदाहारंभेजातेब्रह्मांडाद्बहिर्निर्गत्य सर्वगं पृथि
व्याद्यव्यक्तांततत्वगतंपरमात्मानंक्रमेणप्राप्नुवंति । तदुक्तं । भूम्यबूगमन्ननामानंप्राणमग्न्यादिसंस्थितं । मानसंमनआदिस्थंविज्ञानंमन
सिस्थितं । आनंदमव्यक्तगतंक्रमशोयांतिदेवताइति । एवंसर्वगंपरमात्मानंप्राप्यपरांतकालेवर्षशतसमाप्तिपूर्वकालेअव्यक्तस्थंहरिंप
रिपरित्यज्य चरमदेहक्षयार्थंब्रह्मलोकेषुब्रह्मणोलोकाःजनाःगरुडशेषमार्गस्थदेवाइतियावत् । तेषुब्रह्मलोकेषुवरुणसोमादिशेषमार्ग
स्थदेवेषुअग्निसूर्यादिगरुडमार्गस्थदेवेषुचस्थित्वाप्रविश्यतत्रचरमदेहक्षयेजाते परांतकालेपरसमाप्तिकाले पुंनामकब्रह्मणासहविरजा
नदीस्नानेनपरामृतात्प्रकृतिबंधाल्लिंगदेहाच्चपरिमुच्यंतिपरिमुच्यंते । अत्यंतंविमुक्ताःभवंतीति । पुंनामकब्रह्मणासहेत्याद्यर्थेप्रमाणं
प्रागुक्तमेवानुसंधेयं । इदानींव्युत्पादनार्थंशेषमार्गोगरुडमार्गश्चप्रदर्श्यते । वरुणसोमानिरुद्धकामवारुणीशेषसरस्वतीविरिंचेषुपूर्वपूर्व
स्यउत्तरोत्तरस्मिन्प्रवेशेसतिदेहलयोभवति । सएवशेषमार्गः । तत्राश्विनोरब्देवतानांचवरुणेदेहलयः । तस्यकुबेरस्यचसोमेदेहलयः । ॥ ५५ ॥
तस्यविष्वक्सेनादिपार्षदानांचानिरुद्धेदेहलयः । अनिरुद्धस्यसनकादीनांचकामे । तस्यवारुण्यां । तस्याःशेषे । तस्यसरस्वत्यां । त

स्याःविरिंचदेहेलयइतिज्ञेयं । अथगरुडमार्गउच्यते । अग्न्यवराणामन्यत्रप्रविष्टत्वेनअनुक्तानांसर्वदेवानामग्नौप्रवेशः । तस्यसूर्ये ।
तस्यबृहस्पतौ । एवंविनायकाख्यदेवानांगणेशेऋभूणांचपृथिव्यांप्रवेशः । गणेशपृथिव्योश्चबृहस्पतौप्रवेशः । बृहस्पतिस्वायंभुवम
नुनिर्ऋतिमरुद्गणानांचंद्रेप्रवेशः । यमस्यचस्वायंभुवेदेहलयः । एवंबृहस्पत्यादिभिःप्रविष्टस्यसुपर्णपत्न्यांप्रवेशः । तस्याःसुपर्णे ।
तस्यसरस्वत्यां । तस्याःब्रह्मणिइत्येवंदेवानांस्वोत्तमप्रवेशेनचरमदेहलयइति । अयंचदेवानांस्वोत्तमप्रवेशेनदेहलयःपृथिव्यादिसर्व
तत्वलयानंतरंभवति । तथाहि । सर्गक्रमतोविपर्ययः । मुक्तौलयेइत्यनुव्याख्यानेसर्गक्रमवैपरीत्येनदेवानांस्वोत्तमप्रवेशेनचरमदेह
लयउक्तः । तत्रसूक्ष्मसृष्टौदेवानांसूक्ष्मोपादानकदेहयोगलक्षणोत्पत्तिरेवसर्गः । तत्वांतर्देवानांदेहोत्पत्तिस्त्वनुसर्गः । तदुक्तंत
त्वप्रकाशिकायां । आकाशःसंभूतइत्यादौजडानांमुख्योत्पत्तिरुच्यते । देवानांत्वनुसर्गइति । अतोमुख्यामुख्ययोर्मुख्येसंप्रत्यय
इतिन्यायेनानुव्याख्यानगतसर्गशब्देनमुख्यस्यैवसर्गस्यग्रहणं । तेनसर्वतत्वलयानंतरंसूक्ष्मसृष्टौयोदेवानामुत्पत्तिक्रमःतद्वैपरीत्ये
नैवदेवानांस्वोत्तमप्रवेशेनचरमदेहलयइतिसिद्ध्यतीति ॥ ६ ॥ एवंसर्वज्ञानिनांकर्मक्षयादिप्रकृतिबंधध्वंसांतोमोक्षोज्ञानेनभवती
तितत्रतत्रप्रागुक्तं । इदानींप्रकृतिबंधध्वंसानंतरंभाविनींवासुदेवप्रवेशरूपांतदनंतरभाविनींसालोक्यादिरूपामपरामपिमुक्तिंदर्शय
ति ॥ गताइति ॥ अत्रमंत्रेअव्ययेप्रविशंतीत्यनेनमहाप्रलयेनरोत्तमादिदेवतांतानांविष्णौप्रवेशमुक्त्वामहाप्रलयसमाप्त्यनंतरंतेषामे
व सालोक्यसार्ष्टिसारूप्यसामीप्यैकत्वमित्युतेतिभागवतोक्तसालोक्यादिपंचविधमुक्तिंदर्शयितुंएकीभवंतीत्युक्तं । तेनस्वरूपैक्यंनो

उप० । गताःकलाःपंचदशप्रतिष्ठादेवाश्चसर्वेप्रतिदेवतासु । कर्माणिविज्ञानमयश्चआत्मापरेव्ययेसर्वएकीभवंति ॥ ७ ॥

च्यते । किंतुपारिभाषिकएवैकीभावइतिप्रमाणेनैवाह ॥ **अविरोधइति** ॥ अविरुद्धमतिकत्वमित्यर्थः । एकविषयकमतिकत्व मितिपरमार्थः । तत्रब्राह्मणाराजकुलएकीभवंतीत्यादौयथाश्रुतमेव । मुक्तानांतुद्वेधा । ब्रह्ममत्यनुकूलमतिकत्वंब्रह्मचक्षुरादिप्र योज्यमतिकत्वंचेति । तत्राद्यंसर्वमुक्तसाधारणं । द्वितीयंतुसायुज्ययोग्यमुक्तमात्रनिष्ठं । अतएवोक्तं । आदत्तेहरिहस्तेनहरिदृष्ट्यै वपश्यति । गच्छेच्चहरिपादाभ्यांमुक्तस्यैषास्थितिर्भवेदिति । अनेनसायुज्यंनाम तच्चक्षुरादिप्रयोज्यमतिकत्वं तद्धस्तादिप्रयोज्य क्रियावत्त्वंच । तदेकीभवंतीत्यनेनोच्यतइत्युक्तंभवति । अस्मिन्पक्षेएकशब्दस्यमतौलक्षणा । तद्विषयकत्वंचशक्यसंबंधः । ततो मतिमत्सुलक्षणेतिलक्षितलक्षणैषा । शक्यपरंपरासंबंधोलक्षितलक्षणेतितल्लक्षणलाभात् । ततश्चैकीभवंतीत्यस्यैकविषयकमतिका भवंतीत्यर्थोलक्ष्यतइतिबोध्यं । चतथाशब्दौपरस्परसमुच्चयार्थौ ॥ **सादृश्यमिति** ॥ इदंचकीटोभ्रमरेणैकीभूतइत्यादौयथाश्रुत मेव । मुक्तेषुसमानैश्वर्यरूपासार्ष्टिः । चतुर्भुजत्वादिरूपंसारूप्यंचेतिबोध्यं । इदंचसार्ष्टिसारूप्यंयोग्यानभिप्रेत्योक्तं । अत्रपक्षे सादृश्यमेकपदवाच्यमेव । एकोन्यार्थेप्रधानेचप्रथमेकेवलेपरे ॥ साधारणेसमानेऽल्पेसंख्यायांचप्रयुज्यतइत्येकशब्दस्यनानार्थ कत्वोक्तेरितिध्येयं ॥ **एकदेशस्थितिरिति** ॥ एकस्थानस्थितिकत्वमित्यर्थः । इदंचगावःसायंगोष्ठेएकीभवंतीत्यादौयथा श्रुतमेव । मुक्तेषुतु भगवान्व्यक्तरूपेणभूम्यादिश्वेतद्वीपांतेयत्रतिष्ठतितल्लोकस्थितिकत्वं । अत्रैवचस्थितिस्तेषामित्याद्युक्तेः । प्रमोदंतेनिर्दुःखाश्चधरादिष्वित्युक्तेश्च । सामीप्ययोग्यानांतुभगवत्समीपेतल्लोकस्थितिकत्वं । तत्रापिक्रमयोगेनज्ञानाधिक्यात्समी



भा० । अविरोधश्चसादृश्यमेकदेशस्थितिस्तथा । एकीभावस्त्रिधाप्रोक्तोनैकीभावःस्वरूपयोः ।

पगाइत्युक्तेरिति । अत्रपक्षे एकशब्दस्यतत्स्थेलक्षणा । देशश्चयोग्यतयालभ्यते । ततश्चएकीभवंतीत्यस्यएकदेशस्थिताःभवंतीत्यर्थइतिवक्तव्यं । अनेनसालोक्यादिपंचविधमुक्तिरेकीभवंतीत्यस्यार्थइतिलभ्यते । तथाशब्दानंतरमितिशब्दोध्याहार्यः । एकीभवंतीत्युक्त्यास्वरूपैक्यमेवैकीभावःकिंनस्यादित्यतआह ॥ नैकीभावइति ॥ स्वरूपयोरैक्यमेकीभावोनभवतीत्यर्थः । कुतइत्यतआह ॥ कुतोऽभूतस्येति ॥ किंशब्दआक्षेपे । तेननास्तीतिलभ्यते । एवशब्दस्याध्याहृतेनसिद्धमित्यनेनान्वयः । हिशब्दोहेतौ । यस्मात्स्वरूपैक्यंसिद्धमेवनतुसाध्यंअतोऽभूतस्यभवनंनास्तीत्यर्थः । अयमाशयः । एकीभवंतीत्यत्रच्विप्रत्ययोस्ति । सप्रकृत्यर्थस्याभूततद्भावमाचष्टे । अभूततद्भावेकृभ्वस्तियोगेसंपद्यकर्तरिच्विरितिपाणिनिस्मृतेः । नचात्रैकशब्दवाच्यंस्वरूपैक्यंप्रागभूतंपश्चाद्भवति । जीवब्रह्मैक्यस्यानादिब्रह्मस्वरूपत्वेनप्रागपिविद्यमानत्वात् । तथाचयस्मात्स्वरूपैक्यंप्राक्सिद्धमेव । नत्वभूतं । तस्मात्प्रकृतेऽभूतस्यभवनंनास्ति । अतश्च्विप्रत्ययार्थबाधात्स्वरूपयोरैक्यमेकीभावोनभवति । यदर्थमेकीभावोविविच्योक्तस्तदिदानीमाह ॥ अतइति ॥ जीवानांहरिणासह संश्लेषएकीभावो नतुस्वरूपैक्यं । यथानदीनांअब्धिनासहसंश्लेषएव एकस्थानस्थितत्वमेवैकीभावो नतुस्वरूपैक्यं । नित्यभिन्नस्वरूपत्वात् । एवंप्राग्विमतयोब्राह्मणाराजकुलएकीभवंतीत्यत्रयथाविरुद्धानां प्राग्विरुद्धमतिकानांनृणांनरांतरैःसह विरोधस्यवर्जनंएकविषयमतिकत्वमितियावत् एकीभावो नतुस्वरूपैक्यं । अन्योन्यभि

---

भा० । कुतोऽभूतस्यभवनंस्वरूपस्यैक्यमेवहि । अतोनदीनांजीवानांविरुद्धानांनृणामपि । अब्धिनाहरिणाचैवतथैवचनरांतरैः । एकीभावस्तुसंश्लेषोविरोधस्यचवर्जनं । स्वरूपैक्यंकुतस्तेषांनित्यभिन्नस्वरूपिणां ।

न्नत्वेनप्रमितत्वात् । तथाजीवानांहरिणासह मत्यैक्यमेकीभावो नतुस्वरूपैक्यमितियोज्यं । अपिचशब्दाःपरस्परसमुच्चयार्थाः । आद्यएवशब्दःसंश्लेषइत्यनेनसंबध्यते । द्वितीयस्तुवर्जनमित्यनेन । तथाशब्दउपमायां । तुशब्दोविशेषार्थः । स्थानविशेषेसंश्लेषइत्यन्वयः । स्वरूपैक्यंकुतइत्यत्रहेतुगर्भविशेषणंनित्यभिन्नस्वरूपिणामिति । तर्ह्येकीभावोक्तिरयुक्तास्यादित्याशंक्यतत्राप्येकीभावःपारिभाषिकएव । अन्यथाच्विप्रत्ययार्थबाधप्रसंगादितिभावेनाह ॥ **हरेरपीति** ॥ ननुभगवद्रूपाणांप्रागविद्यमानस्वरूपैक्यंपश्चाद्भवतीत्येवार्थःकिंनस्यादित्यतआह ॥ **सिद्धत्वादिति** ॥ भगवद्रूपाणांस्वरूपैक्यस्यसिद्धत्वा दनादिसिद्धत्वात् । भवउत्पत्तिःनोनास्ति । अतश्चिवप्रत्ययार्थबाधादुक्तएवार्थोयुक्तइतिभावः । प्रसिद्धार्थतांनिराकर्तुंगताइत्येतद्व्याकुर्वन्नेवान्वयमपिदर्शयति ॥ **गताःमुक्ताइति** ॥ प्रकृतिबंधान्मुक्ताइत्यर्थः । श्रृंगग्राहिकयाकलाप्रदर्शनार्थंप्राणादीत्युक्तं । कर्माणीतिपृथगभिधानेनपंचदशेति । जडकलाव्यावृत्त्यर्थंकलारूपदेवताइति । सजीवस्यशरीरस्यभागःकला सा रूपमभिमन्यमानं याभिस्ताःकलारूपाः प्राणःश्रद्धाखंवायुःज्योतिरापःपृथिवींद्रियंमनःअन्नंवीर्यंतपोमंत्राःगोलकाःनामइत्येवंयाःपंचदशकलाःतदभिमानिदेवताइत्यर्थः । ततश्चान्यत्रोक्ताः विष्णोःप्राणस्ततःश्रद्धातस्यारुद्रोमनोभिधः । तस्मादिंद्रस्त्विद्रियात्मातस्यसोमोन्नदेवता । ततश्चवरुणःसृष्टस्तस्मादग्निस्ततोवरः । आकाशदेवताविघ्नस्ततोवायोःसुतोमरुत् । तस्मादग्निःपावकाख्यःप्रथमाग्नेःसुतस्ततः । ततःपर्जन्यउद्भूतःस्वाहातोमंत्रदेवता । उदकात्मकोबुधस्तस्याउषानामात्मिकाततः । ततःशनिःपृथिव्यात्माकर्मात्मापुष्करस्ततइति । देवाश्चसर्वइत्यनेनैवकलादे 

भा० । हरेरपिस्वरूपाणामेकीभावोयदोच्यते । संश्लेषएवसिद्धत्वात्स्वरूपैक्यस्यनोभवइतिच । गताःमुक्ताः प्राणादिपंचदशकलारूपादेवताः ।

वतानांलाभात्पृथगुक्तिरयुक्तेत्याशंक्यदेवास्सर्वइत्येतद्विशिनष्टि ॥ **अन्येचदेवाःसर्वइति** ॥ कलादेवेभ्योन्येसर्वेदेवाश्चेत्यन्वयः । कलादेवानांतदन्यदेवानांच प्रतिदेवतासुप्रतिष्ठाइतिविशेषणं । ततःप्रतिदेवतास्वित्येतदनूद्यव्याचष्टे ॥ **प्रतिदेवतासु(देवता)प्रतिबिंबभूतास्विति** ॥ देवताःप्रतिगताःप्रतिदेवताः । अत्यादयःक्रांताद्यर्थेद्वितीययेतिसमासः । प्रतिबिंबानामेवचबिंबानिप्रतिगतत्वमितिप्रतिबिंबभूतास्वितिव्याख्यानंयुक्तं । अत्रोचितंविशेष्यमाह ॥ **प्रजास्विति** ॥ प्रतितिष्ठंतीतिप्रतिष्ठाः । इगुपधज्ञाप्रीकिरःकइत्यस्मात्कइत्यनुवृत्तौ आतश्चोपसर्गेइतिसूत्रात्कइतिभावेनप्रतिष्ठाशब्दार्थमाह ॥ **प्रतिप्रतिस्थिताइति** ॥ अत्रप्रतिष्ठाइत्यस्यार्थकथनंस्थिताइति । प्रतिप्रतीत्यत्रप्रथमस्यप्रत्येकमित्यर्थः । द्वितीयस्यतुनियामकत्वेनेति । नतुद्विर्वचनमेतत् । अनुशासनाभावादितिबोध्यं । कर्माणिविज्ञानमयश्चआत्मापरेऽव्ययइतिपदानियोजयति ॥ **कर्माणिविज्ञानमयोजीवश्चपरमात्मनिप्रविशंतीति** ॥ अत्रजीवश्चेत्यनेनआत्मशब्दोजीवार्थः । चशब्दस्तदन्वितइतिसूचयति । अत्रपरमात्मनिप्रविशंतीत्यनेनपरेऽव्ययइतिपदद्वयंपरमात्मपरं । प्रविशंतीतिचाध्याहर्तव्यमितिसूचयति । अत्रपरेऽव्ययइत्युक्तःपरमात्माचतुर्व्यूहगतवासुदेवएव । तस्यैवलिंगदेहप्रकृतिबंधाभ्यामत्यंतमोक्षानंतरंप्राप्यत्वात् । यथोक्तं । विरजायांकृतस्नानाब्रह्मणासहसर्वशः । त्यक्तलिंगास्ततःसर्वेस्वरूपेणैक्यवत्स्थिताः । ततोदृष्ट्वाशिंशुमारंश्वेतद्वीपंनिरीक्ष्यच । विशंतिवासुदेवाख्यंहरेरूपंचतुर्थकंइति । अत्रततोदृष्ट्वाशिंशुमारमित्याद्युक्तं । शिंशुमारदर्शनादिकंविरजानदीस्नानानंतरंतत्तीरस्थितानामेव । नतुशिंशुमारादिलोकंगतानां तदाब्रह्मांडस्यतदंतस्थलोकानांचसंकर्षणमुखाग्निनादग्धत्वा

भा० । अन्येचदेवाःसर्वेप्रतिदेवतासुदेवताप्रतिबिंबभूतासुप्रजासुप्रतिप्रतिस्थिताः । कर्माणिविज्ञानमयोजीवश्चपरमात्मनिप्रविशंति ।

दितिध्येयं । प्रतिदेवतासुप्रतिष्ठाइत्यनेनकलादेवानांतद्भिन्नदेवानांचयदुक्तंप्रजासुनियामकत्वेनस्थितत्वं यच्चपरेव्ययेप्रविशंतीत्युक्तं तदुभयंप्रमाणेनैवविवेचयति ॥ प्रतिबिंबोहरेःप्राणइति ॥ मुख्यप्राणइत्यर्थः ॥ अन्याःकलाइति ॥ श्रद्धादिकलादेवताभारत्याद्याइत्यर्थः ॥ क्रमादिति ॥ उत्तरोत्तराःकलादेवताःपूर्वपूर्वकलादेवतानांतारतम्यक्रमेणप्रतिबिंबाइत्यर्थः ॥ कलानामिति ॥ अन्यादेवताःकलादेवतानांप्रतिबिंबाइत्यर्थः । नराःनरादयःदेवतानांप्रतिबिंबाइत्यर्थः ॥ तस्मादिति ॥ यतएवंप्राणादिदेवानांदेवेतरजीवानांचपूर्वपूर्वप्रतिबिंबत्वं । प्रतिबिंबत्वंचतदधीनत्वेसतितत्सदृशत्वं । तस्मादुत्तरोत्तरेषांपूर्वपूर्वाधीनत्वादित्यर्थः । नरेषु चेतिचशब्देनदेवेष्वितिसमुच्चीयते । अखिलाःप्राणादिसर्वेदेवाःसर्वेषुमुक्तेषुनरेषुस्वावरदेवेषुचनियामकाःसंतःतिष्ठंतीत्यनेनप्रतिदेवतासुप्रतिष्ठाइत्येतत्प्रमापितं। एवंपरमात्मनिचतिष्ठंतीत्यनेनपरेव्ययेप्रविशंतीत्येतत्प्रमापितं। नात्रसंदेहइत्यनेनमुक्तेषुदेवानांकथंनियामकत्वंतन्नियम्येंद्रियाभावादितिनिरस्तं। जडेंद्रियाद्यभावेनतन्नियामकत्वाभावेपिस्वरूपेंद्रियादिनियामकत्वोपपत्तेः । तदुक्तमनुव्याख्याने । मुक्तस्वकीयावरयंतृतास्तिमुक्तावपिब्रह्मपुरस्सराणामिति । अन्येतुब्रह्मणोंतर्नियामकत्वंतदन्यदेवानांबहिर्नियामकत्वमेव । तदुक्तंछांदोग्यभाष्ये । तुरीयायामवस्थायांप्राणादेवविबोधनं । तथाचसंस्मृतिस्तत्रप्राणवश्यतयाभवेदिति । अतस्तस्मात्सर्वेषुमुक्तेषुनरेषुचनियामकाइत्युक्तं । प्राणान्यदेवानांमुक्तनियामकत्वंबहिस्स्थित्वाप्रेरकत्वेनैवेत्याहुः । ननुकर्मणामपिकला

---

भा० । प्रतिबिंबोहरेःप्राणस्तस्यचान्याःकलाःक्रमात् । कलानांदेवताअन्यादेवतानांनराअपि । तस्मात्सर्वेषुमुक्तेषुनरे(ष्वपि)षुच नियामकाः । तिष्ठंतिनात्रसंदेहःपरमात्मनिचाखिलाइतिमुक्तविवेके ।

त्वात्कलाइत्यनेनैवतद्ग्रहणसंभवात्पृथगुक्तिर्व्यर्थेत्याशंकांप्रमाणेनैवपरिहरति ॥ कलाभ्यइति ॥ कर्मप्रत्यवरामिति ॥ कर्माभिमानिदेवोत्यंतावरइत्यर्थः । कलाभ्यइत्युपलक्षणं । अन्यदेवेभ्यश्चेत्यपिग्राह्यं ॥ तदिति ॥ कर्मेत्यर्थः । कःकर्माभिमानिदेवइत्यतआह ॥ पुष्करइति ॥ चोवधारणे । पुष्करएवकर्मेत्युच्यतइतियोज्यं ॥ ततश्चायंमंत्रार्थः ॥ गताः प्रकृतिबंधान्मुक्ताइति वक्ष्यमाणानांसर्वेषांविशेषणं । प्रतिदेवतासु देवताप्रतिबिंबभूतासुमुक्तप्रजासु । प्रतिष्ठाःप्रतिप्रतिनियामकत्वेनस्थिताःप्राणाद्याःपंचदशकलादेवा स्तदन्यसर्वदेवाश्च । कर्माणिकर्माभिमानिदेवताच । विज्ञानमयआत्माजीवश्चेत्येतेसर्वेपरेऽव्ययेपरमात्मनिचतुर्व्यूहगतवासुदेवनामकेप्रविशंति । इतःपरं महाप्रलयसमाप्तिपर्यंतंविष्णौस्थित्वासृष्टौजातायांपरमात्मनोबहिर्निर्गत्यश्वेतद्वीपंगत्वातत्रश्वेतद्वीपपतिंदृष्ट्वातदाज्ञयेतिवाक्यमध्याहार्यं । तदुक्तं । सर्वेपितेमुक्तगणाअमंदसांद्रंनिजानंदमशेषतोपि । भुंजंतएवासतईशदेहेलयेथसर्गेबहिरेवयांतीति । श्वेतद्वीपंततोगत्वादृष्ट्वाविष्णुंचचेतनाः । अनुज्ञाताःप्रमोदंतेनिर्दुःखाश्चधरादिष्विति ॥ एकीभवंतीति ॥ प्रकृताःसर्वेपिमुक्ताःप्राग्विभिन्नमतयोधुनैकविषयकमतिकाःभवंति । यथाप्राग्विमतयोब्राह्मणाःराजकुलएकीभवंतितद्वत् । तत्रापिसायुज्यमुक्तियोग्याःभगवच्चक्षुरादिमतिकाःतद्धस्तादिप्रयोज्यक्रियाःभवंति । सार्ष्टिसारूप्ययोग्यास्तुसादृश्यंप्राप्नुवंति । यथाकीटाःभ्रमरैरेकीभूतास्तद्वत् । सालोक्यसामीप्ययोग्यास्तुक्षीराब्ध्यादिस्थितभगवद्रूपापेक्षयाएकस्थानस्थितिकाःभवंति। अतःएकीभवंतीतियुज्यते। यथाह्यितस्ततस्स्थिताःगावःसायंगोष्ठएकीभवंतीत्युक्तिस्तद्वत् । अत्रसालोक्ययोग्यानांकिं

भा० । कलाभ्यःपृथगुक्ततत्पुष्करःकर्मचोच्यतइतिच ।

चिद्दूरेस्थानैक्यं । सामीप्यभाजांतुभगवत्समीपइतिविवेक्तव्यमिति। अद्वैतवादिनस्तुकलाः मुक्तिकालेविदुषोदेहारंभकाःप्राणाद्याः पंचदशकलाः प्रतिष्ठाःस्वकारणानिप्रतिगताःभविष्यंति। तदभिमानिनःसर्वेदेवाश्चप्रतिदेवतासुस्वमूलरूपेषुगताःभविष्यंतीतिव्याचक्षते। तान्दूषयति ॥ अन्यथेति ॥ परव्याख्यानइत्यर्थः। यच्चप्रतिदेवताशब्दव्याख्यानंतदपिदूषयति ॥ नचेति॥ देवानांमूलरूपाणिप्रतिदेवताइतिनोच्यंते । अनुशासनाद्यभावात्। अतश्चपरव्याख्यानमयुक्तमित्यर्थः।ननुप्रतिदेवतास्वित्यस्यप्रतिबिंबभूतास्विति भवद्व्याख्यानमप्ययुक्तं। अपदार्थत्वादवाक्यार्थत्वाच्चेत्यतआह॥प्रतिरूपशब्दवद्धिप्रतिदेवताशब्दइति ॥ यथारूपंप्रतिगतंप्रतिरूपमिति। प्रादिसमासेकृतेदेवतासदृशास्तदधीनाश्चप्रतिदेवताशब्देनोच्यंते। तदधीनत्वेसतितत्सदृशत्वमेवचप्रतिबिंबत्वं । अतःप्रतिदेवताशब्देनवाक्यार्थविधयादेवताप्रतिबिंबावगमसंभवाद्युक्तमस्मद्व्याख्यानमिति । ननुतथापिपंचदशकलाइत्यस्यतदभिमानिदेवाइति गताइत्यस्यचमुक्ताइतिव्याख्यानमयुक्तं । निर्मूलत्वात्प्रतीतार्थेबाधकाभावाच्चेत्यतआह ॥ विज्ञानेत्यादिनादेवताएवोच्यंतइत्यंतेन॥ गताःकलाइतिमंत्रे कलाभिमानिनोमुक्तादेवाएवोच्यंते ।इमाःषोडशकलाःइत्याथर्वणब्राह्मणोपनिषत्समाख्यानात् । इमाःषोडशकलाइतिवाक्येयदिमुक्ताःकलाभिमानिदेवाउच्येरन् । तदातत्समाख्यानादस्त्वस्यामाथर्वणमंत्रोपनिषदिमुक्तग्रहणं । तदेवकुतइत्यतउक्तं। इमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्येति ॥ यथासोम्येमाःसमुद्रायणाइतिनदीदृष्टांतपू

भा० । अन्यथागताभविष्यंतीत्यध्याहारोदोषः । नचमूलरूपाणिप्रतिदेवताइत्युच्यंतेदेवानां । प्रतिरूपशब्दवद्धिप्रतिदेवताशब्दः । विज्ञानात्मासहदेवैश्चसर्वैःप्राणाभूतानिसंप्रतिष्ठंतियत्र । इमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छति यथासोम्येमाःसमुद्रायणाइतिनदीदृष्टांतपूर्वकंपुरुषप्राप्तिकथनाच्चमुक्तदेवताएवोच्यंते ।

॥ ५९ ॥

र्वकंपुरुषप्राप्ति कथनादिति । यथाप्राक्समुद्रमप्राप्तानांनदीनांपश्चात्समुद्रप्राप्तिःतथाप्राक्पुरुषमप्राप्तानांकलानांपश्चात्पुरुषप्राप्तिस्तावदुच्यते । नचजडकलानांतदभिमानिनाममुक्तदेवानांवाग्रहणेतत्संभवति। कलानांनाशितत्वेनतद्देवानांजडदेहादिविशिष्टत्वेनभगवत्प्रवेशरूपपुरुषप्राप्तेःश्रुत्यादिसिद्धत्वात् । नन्विमाःषोडशकलाइत्यत्रेमाइतिप्रकृतपरामर्शःक्रियते । नचदेवताःप्रकृताः । तत्कथमुक्तंदेवानामत्रग्रहणमित्यतउक्तं ॥ विज्ञानात्मेति ॥ यत्रेत्यस्यानंतरमितिकलादेवतानांप्रकृतत्वादितिशेषः । तेनकथनाच्चेतिसमुच्चयोपपत्तिः । विज्ञानात्माजीवःप्राणाःइंद्रियाणिभूतानिच । उपलक्षणमेतत् । जीवादिषोडशकलाभिमानिदेवैःसहयत्रसंप्रतिष्ठतीतिविज्ञानात्मेतिपूर्वखंडस्थवाक्येनोच्यते । ततश्चदेवानांप्रकृतत्वादिमाइतिपरामर्शोपपत्तिः ।नचैवमपिमुक्तदेवाइतिव्याख्यानमयुक्तमितिवाच्यं । अमुक्तदेवानांपुरुषप्राप्त्यनुपपत्त्यालक्षणयामुक्तदेवग्रहणोपपत्तेरिति । पुरुषंप्राप्येत्युक्तःपुरुषोजीवश्चेत्कथंतंप्राप्तानांतुमुक्तत्वमित्यतआह ॥सइति॥ प्राणमसृजतेत्युपक्रमवाक्योक्तस्तावद्भगवानेव । मुख्यप्राणादिस्रष्टृत्वलिंगात्। अतःउपक्रमानुसारेणपुरुषंप्राप्येत्युपसंहारोक्तःपुरुषोभगवानेवेत्यंगीकार्यं । अन्यथोपक्रमोपसंहारयोर्विरोधप्रसंगात् । यद्यप्युपक्रमादुपसंहारःप्रबलःव्याख्यानरूपत्वात्परत्वाच्च। तथापियदोपक्रमोनिरवकाशःतदोपसंहारादपिप्रबलएवेत्यन्यत्रोक्तं। अतःउपक्रमानुसारेणोपसंहारस्यार्थांतरकथनंयुक्तमेवेतिभावः॥७॥ परेऽव्ययइत्यनेनोक्तंभगवत्प्रवेशरूपंमोक्षंदृष्टांतकथनपूर्वकंविवृणोतिवेद

भा० । सप्राणमसृजतेत्यादेश्चपुरुषोभगवान् ।

पुरुषः ॥ यथानद्यइति ॥ अत्रमंत्रेनामरूपेविहायनामरूपाद्विमुक्तइतिचनामरूपत्यागएवोच्यतइतिप्रतीतिनिरासायतद्वाक्यद्वयंप्र
माणेनैवव्याचष्टे ॥ अगम्येति ॥ मुक्तिगाःनराःजीवाःअमुक्तैरगम्यनामरूपत्वाद्विहीननामरूपाइत्युच्यंतइतिशेषः । नतुतद्रहितत्वा
त् । अन्यथाबहुप्रमाणविरोधत्वादितिहिशब्दार्थः । अनेननामरूपाद्विमुक्तइतिवाक्यंविवृतं। अगम्यनामरूपत्वेननामरूपराहित्यो
क्तौदृष्टांतमाह ॥ अशरीरइति ॥ यथावायुःसामान्यपुरुषागम्यत्वादशरीरउच्यतेतथेत्यर्थः । एवंनामरूपाद्विमुक्तइतिदृष्टांत
वाक्यंव्याख्यायेदानींनामरूपेविहायेतिदार्ष्टांतिकवाक्यमपिव्याख्याति ॥ एवंनद्यइति ॥समुद्रस्थाःनद्यःसामान्यागम्यरूपतः ।
भावप्रधानोनिर्देशः । रूपपदंचोपलक्षणं । सामान्यागम्यनामरूपत्वान्नामरूपेविहायास्तंगच्छंतीत्युच्यंतइत्यर्थः । ननुसमुद्रप्राप्ता
नांनदीनांसामान्यागम्यनामरूपत्वंसिद्धं । अतस्तेननिमित्तेनकथंनामरूपेविहायेत्याद्युक्तमित्याशंकांस्मृत्यैवपरिहरति ॥ स्वकी
यमिति ॥ अनेननदीदेवतानांस्वकीयनामरूपज्ञानंनास्ति । प्रधानवायोस्तुतदस्तीत्युच्यते । तेनप्रधानवाय्वाद्यगम्यनामरूप
त्वाभावेपिनदीदेवतारूपसामान्यजीवागम्यनामरूपत्वमस्त्येव अतस्तेननिमित्तेननामरूपराहित्योक्तिर्युज्यतइतिभावः।एवंनामरूप
राहित्यकथनमंगीकृत्यवाक्यद्वयंव्याख्यांतं । इदानींतुतदेवनास्तीतिभावेनविमुक्तइत्येतदनूद्यव्याचष्टे ॥ विमुक्तइत्यमुक्तइ

उप० । यथानद्यःस्यंदमानाःसमुद्रायणाःसमुद्रंप्राप्यास्तंगच्छंतिनामरूपेऽविहाय । तथाविद्वान्नामरूपाद्विमुक्तःपरात्परंपुरुषमुपैतिदिव्यं ॥ ८ ॥

भा० । अगम्यनामरूपत्वादमुक्तैर्मुक्तिगानराः । विहीननामरूपास्तुनतुतद्रहितत्वतः । अशरीरोयथावायुःसामान्यागम्यदेहतः । एवंनद्यःसमुद्रस्थाःसामान्यागम्यरूपतः ।
स्वकीयमुदकंनद्यःसमुद्रेनैवजानते । वायुस्तुतत्पृथग्ज्ञात्वामेघेकृत्वाप्रवर्षतीतिच ॥ विमुक्तइत्यमुक्तइत्यर्थः । विप्रियइतिवत् ।

त्यर्थइति ॥ विमुक्तइतिपदस्यअमुक्तइत्यर्थः । विर्निषेधेपृथग्भावेइतिवचनबलेन्नवीत्युपसर्गस्याभावार्थत्वंप्रयोगंचदर्शयति ॥ विप्रियइतिवदिति ॥ इदमुपलक्षणं । निपातश्चोपसर्गश्चधातवश्चेतितेत्रयः । अनेकार्थाःस्मृतास्सर्वेपाठस्तेषांनिदर्शनमित्युपसर्गाणामनेकार्थत्वाभिधानात् । वीत्युपसर्गस्यानेकार्थत्वंयुक्तमित्यपिग्राह्यं । विमुक्तोविप्रियइत्युभयत्रापिप्रादिग्रहणस्यगत्यर्थत्वेनकुगतिप्रादयइतिसूत्रेणसुप्सुपेतिवासमासः । तेननसमासानुपपत्तिशंकेतिध्येयं । एवंनामरूपाद्विमुक्तइत्यत्रनामरूपराहित्यंनोच्यते । किंतुतत्साहित्यमेवेत्युक्तं । नन्वेवंसतिपूर्वार्धोक्तदृष्टांतविरोधःस्यात् । तत्रनामरूपेविहायेतितद्धानस्योक्तत्वादित्याशंकापरिहारायइदानींनामरूपेविहायेत्यत्रापिनामरूपसाहित्यमेवोच्यतइतिभावेनपदघट्ट( पदच्छेद )रूपंव्याख्यानंकरोति ॥ अविहायेतिचेति ॥ ननुनामरूपेइत्यस्यद्विवचनांतत्वादेकारांतत्वाच्चप्रगृह्यत्वंप्राप्नोति । ईदूदेद्द्विवचनंप्रगृह्यमितिप्रगृह्यसंज्ञाविधानात् । ततश्चप्लुतप्रगृह्याअचिनित्यमितिसूत्रेणप्रगृह्यस्यप्रकृतिभावेनामरूपेअविहायेतिसंध्यभावएवस्यात् । गंगेअमूइत्यादिवत् । नामरूपेविहायेतिसंधिस्तुकथमितिचेत् । उच्यते । षष्ठीयुक्तश्छंदसिवेतिसूत्रेवेतियोगंविभज्यछंदसिसर्वेविधयोवाभवंतीतिव्याख्यातंशाब्दिकैः । तेनसर्वेविधयश्छंदसिविकल्प्यंतइतिपरिभाषायाःसिद्धत्वात् । वेतियोगविभागेनवापरिभाषयावानामरूपेइत्यत्रप्रगृह्यत्वंनभवति । ततश्चएङःपदांतादतीतिसूत्रेणपूर्वरूपेसतिदंपतीवेत्यादिवन्नामरूपेविहायेतिसंधिर्युक्तएवेत्येषादिक् । स्यादेतदेवंपूर्वोत्तरार्धयोर्व्याख्यानं । यदिनामरूपविनाशाभावःप्रमितःस्यात् । तदेवकुतइत्यतआह ॥ अनंतमिति ॥ अनं

भा० । अविहायेतिच । अनंतंवैनामेतिश्रुतेः ।

तंवैनामअनंतावैविश्वेदेवाइतिश्रुतेरित्यर्थः । नामअनंतंवै । विनाशशून्यमेव । अनंताविनाशशून्याएवेतिश्रुतेःनामरूपं चाविनाशीत्यंगीकार्यं । अनंतावैविश्वेदेवाइतिरूपाविनाशोक्तेरितिभावः । अत्रेश्वरबुद्ध्युपाधिक्रमविशिष्टस्यनाम्नःस्वरूपेणै वनाशोनास्ति । उपाधिभूतेश्वरबुद्धेर्नाशाभावात् । अस्मदादिबुद्ध्युपाधिक्रमविशेषविशिष्टनाम्नस्स्वरूपेणनाशोपिप्रवाहरूपे णननाशइत्यभिप्रेत्यअनंतंवैनामेतिश्रुतावुक्तमित्यवगंतव्यं ॥ **ततश्चायंमंत्रार्थः** ॥ यथासमुद्रायणाःसमुद्रोअयनंआश्रयोया सांताःसमुद्रायणाः । णत्वंछांदसं । दृष्टानुविधिर्हिसंज्ञाछंदसोरिष्यतइत्यभियुक्तोक्तेः । स्यंदमानाःस्रवंत्यः । स्यंदूप्रस्रव णइत्युक्तेः । नद्यःसमुद्रंप्राप्य । नामरूपेअविहाय । अस्तंसामान्यजीवादर्शनविषयतांगच्छंति । तथाविद्वान्नामरूपाद्वि मुक्तःअमुक्तपुरुषागम्यनामरूपयुक्तइतियावत् । यद्वानामरूपाद्विमुक्तःअमुक्तःसन् । परात्परंदिव्यपुरुषंभगवंतमुपैतिप्रविश तीति ॥ ८ ॥ वेदपुरुषःस्वोक्तार्थेतात्पर्यद्योतनायएतदुपनिषदुक्तप्रकारेणभगवज्ज्ञानिनःफलमाह ॥ **सयइति** ॥ अत्रपरमंब्रह्म वेदब्रह्मैवभवतीतिवाक्यंऐक्यार्थकत्वप्रतीतिनिरासायप्रमाणेनैवव्याचष्टे ॥ **परंब्रह्मेति** ॥ ऐक्यार्थत्वेपरमितिविशेषणमनुपपन्नं । अद्वैतमतेमुक्तौपरापरभेदाभावादितिज्ञापयितुंपरमितिविशेषणं । अवधारणात्मकतुशब्दस्यबृंहितएवेत्यन्वयः । तथाचपुरुषःपरं ब्रह्मविदित्वास्वयोग्यतः भावप्रधानोनिर्देशः । स्वयोग्यतानुसारेणपूर्णएवभवतिनतुब्रह्मात्मकः । अन्यथान्यज्ज्ञातंअन्याभावः

उप० । सयोहवैतत्परमंब्रह्मवेदब्रह्मैवभवति । नास्याब्रह्मवित्कुलेभवति । तरतिशोकंतरतिपाप्मानंगुहाग्रंथिभ्योविमुक्तोऽमृतोभवति ॥ ९ ॥

भा० । परंब्रह्मविदित्वातुबृंहितःस्यात्स्वयोग्यतः ।



स्वस्यप्राप्तइतियावत् । नचेष्टापत्तिः । यद्ब्रह्मज्ञायतेतद्भावएवमुक्तौभवतीत्यंगीकारेविरोधादित्येवंश्रुतिर्व्याख्यातेतिज्ञेयं । स्वयोग्यतइतिकिमर्थंवक्तव्यमित्यतआह ॥ **नायोग्यमिति** ॥ एवंवेदब्रह्मैवभवतीत्यस्यार्थांतरपरत्वेप्रमाणमुक्तं । इदानीमैक्य परत्वाभावेपिप्रमाणंपठति ॥ **ब्रह्मत्वमिति** ॥ जीवानांब्रह्मत्वंबृंहितत्वंपूर्णत्वमेवस्यात् । नपरमात्मतेत्यर्थः । कुतइत्यतआह ॥ **अस्वतंत्रस्येति** ॥ ननुब्रह्मवेदब्रह्मैवभवतीत्यस्यमुक्तब्रह्मभेदपरत्वंनवेदपुरुषाभिप्रेतं । अतोनेदंव्याख्यानंयुक्तमित्याशंक्यवे दपुरुषेणैवमुक्तब्रह्मभेदस्यासकृदभिहितत्वात्तदभिप्रेतमेतदितिभावेनाह ॥ **यत्रामृतइत्यादिना** ॥ यत्रामृतइतिवाक्येसूर्यद्वारेण विरजाःतेयत्रअमृतःपुरुषःतंलोकंप्रयांतीतिगंतृगम्यभावोक्त्यामुक्तब्रह्मणोर्भेदसिद्धिः । यत्रतत्सत्यस्येतिवाक्येपिसत्यमेवंजयती तिपूर्वभागेनगंतृगम्यभावोक्त्यातत्सिद्धिः । अमृतस्येतिवाक्येमुक्ताश्रयत्वोक्त्या । शरवत्तन्मयोभवेदित्यत्रजीवस्यब्रह्मैकाग्रत्वो क्त्या । ब्रह्मतल्लक्ष्यमित्यत्रजीवब्रह्मणोर्लक्ष्यवेधकत्वलक्ष्यत्वोक्त्या । निरंजनइत्यत्रसाम्योक्त्या । मुक्तब्रह्मभेदसिद्धिरिति ज्ञेयं । नकेवलमिदंव्याख्यानंवेदपुरुषस्याभिप्रेतं । किंतुसकलवेदार्थनिर्णायकन्यायग्रथनात्मकब्रह्मसूत्रकर्तुर्भगवतोबादरा यणस्याप्यभिप्रेतमेव । तेनापिमुक्तब्रह्मभेदस्यासकृदुक्तत्वादितिभावेनाह ॥ **मुक्तोपसृप्येति** ॥ नविष्णोरन्यस्य यस्मिन्द्यौ

भा० । नायोग्यंकिंचिदाप्नोतिकुतएवहरेर्गुणानितिच । ब्रह्मत्वंबृंहितत्वंस्याज्जीवानांनपरात्मता । अस्वतंत्रस्यजीवस्यकुतोनित्यस्वतंत्रतेतिस्कांदे । यत्रामृतःसपुरुषो ह्यव्ययात्मा । यत्रतत्सत्यस्यपरमंनिधानं । अमृतस्यैषसेतुः । शरवत्तन्मयोभवेत् । ब्रह्मतल्लक्ष्यमुच्यते । निरंजनःपरमंसाम्यमुपैति । इत्यादिनामुक्तस्यसर्वत्रभगवत्सकाशाद्भे दस्यैवोक्तत्वाच्च । मुक्तोपसृप्यव्यपदेशात् । जगद्व्यापारवर्जं । प्रकरणादसंनिहितत्वाच्चेत्यादिनाभगवतापिसर्वत्रभेदस्यैवसूचितत्वात् ।

रित्यादिश्रुत्युक्तद्युभ्वाद्यायतनस्यामृतस्यैषसेतुरितिवाक्यशेषेणमुक्तप्राप्यत्वाभिधानात् । तस्यचमुक्तानांपरमागतिरित्यादिना
विष्ण्वेकनिष्ठत्वावगमादित्यर्थः ॥ जगद्व्यापारवर्जमिति ॥ मुक्तानांनजगत्स्रष्टृत्वादिव्यापारःकिंतुतद्व्यतिरिक्तकामावाप्तिरे
व । ननुसर्वान्कामानाप्त्वाअमृतःसमभवदित्यादिश्रुतौमुक्तानांसर्वकामावाप्तिरुच्यतइतिचेत् । सत्यं । तत्रापिजगद्व्यापारवर्ज
मेवसर्वान्कामानाप्त्वेत्यर्थोपपत्तेरित्यर्थः । कुतःश्रुतेरर्थसंकोचइत्यतआह ॥ प्रकरणादसन्निहितत्वाच्चेति ॥ युक्तएवसर्वानितिश्रु
तेःसंकोचः । अत्रजीवस्योच्यमानत्वात् । अस्यजीवप्रकरणत्वेनतदवगमात् । शरीरभेदादुत्क्रम्येतिश्रवणात् । जीवानांचजगद्व्यापा
रशक्तिविरहितत्वात् । बाधकवशात्सामान्यश्रुतेःसंकोचस्यन्याय्यत्वादितिभावः । तदयंप्रयोगः । नमुक्तोजगद्व्यापारशक्तिमान् ।
जीवत्वात्सम्मतवदिति । किंचश्रुतिषुमुक्तप्रभेदएवोच्यते । अतस्तद्विरोधाद्ब्रह्मवेदेत्यादिकंनमुक्तब्रह्मैक्यपरमितिभावेनाह ॥
**नतइति** ॥ परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंतीतिश्रुतेरयमर्थः । कर्तृविशेषानुक्तेर्मुक्ताअमुक्ताश्चेतिशेषः । तन्वास्वरूपे
णवृधानपूर्ण । हेविष्णोत्वंमात्रयामात्रायाःमितेःपरोसीतिशेषः । एवंभूतस्यतेमहित्वंमुक्ताअमुक्ताश्चनान्वश्नुवंतिनप्राप्नुवंतीत्यर्थः ॥
**सोश्नुतइति** ॥ योवेदनिहितंगुहायांपरमेव्योमन्सोश्नुतइत्यन्वयः । अत्रसहेत्यनेनमुक्तब्रह्मभेदोज्ञायते ॥ **ब्रह्मेशानादिभिरि
ति** ॥ ब्रह्मेशानादिभिर्देवैःमुक्तैरमुक्तैश्चयत्कैवल्यंप्राप्तुंनैवशक्यते । तत्कैवल्यंसर्वोत्तमत्वंयत्स्वभावःयस्यनैसर्गिकं । हेहरेसकेव
लः नैसर्गिकसर्वोत्तमत्वविशिष्टोभवानेवेत्यर्थः । ननुयत्रेत्यादिवाक्ये मुक्तोपसृप्यसूत्रे नतेमहित्वमित्यादिश्रुतौमुक्तस्यभगवद्भे

भा० । नतेमहित्वमन्वश्नुवंति । सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता । ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते । तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरइत्यादेश्च ।

दएवोच्यते । ब्रह्मचविष्ण्वादिरूपाद्भगवतोन्यदेव । भगवतःसगुणत्वात्सशरीत्वाच्च । ब्रह्मतुनिर्गुणमशरीरंच। अतोमुक्तब्रह्मभेदपरत्वेनब्रह्मवेदेत्यादिश्रुतिव्याख्यानेनोक्तदोषइत्यतआह ॥ मुक्तेभ्योपीति ॥ अत्रविष्णोस्सर्वापेक्षयागुणाधिकत्वमुक्त्वातस्यान्यथाज्ञानेऽनर्थस्ययथावज्ज्ञानफलस्यचोक्तत्वाद्विष्णोरन्यद्ब्रह्मनास्त्येवेत्यवगम्यते । अतोमुक्तब्रह्मैक्यपरतयोक्तश्रुतिर्नव्याख्यातुंशक्यतइतिभावः । यस्यकस्यापिब्रह्मविदःकुलेब्रह्मज्ञानशून्योनजायतइत्यर्थप्रतीतिंनिवारयितुंनास्याब्रह्मवित्कुलेभवतीतिवाक्याभिप्रायंप्रमाणेनैवाह ॥ देवानामिति ॥ प्रायशइत्यस्यव्यावर्त्यमाह ॥ बलवदिति ॥ अन्येब्रह्मज्ञानशून्याइत्यर्थः । देवानांकुलेब्रह्मज्ञानिनएवजायंतइत्येतत्कुतइत्यतआह ॥ यस्मादिति ॥ शापादिबलवद्धेतुतस्तुअन्येब्रह्मज्ञानशून्याअपिजायंतइतिश्लोकार्थः । देवानामितिकिमर्थमुक्तमित्यतआह ॥ नसंतताविति ॥ ज्ञानिनामपिनराणांसंततौप्रायशोब्रह्मविदोनस्युःनजायेरन् तेकदाचित्ब्रह्मविदोजायंतइतिज्ञापयितुंप्रायशइत्युक्तं। ननुदेवानांसंततौप्रायशोब्रह्मविदोजायंते । नतुज्ञानिनांनराणामित्येतत्कुतइत्यतआह ॥ सुराणामिति ॥ कर्तरिषष्ठी । यस्मात्कृतेयुगेसुराणांनियमः । एवंसुरैर्नियमःकृतःतस्मात्देवानामित्यादिकंयुक्तमिति ॥ तस्मादिति ॥ यस्माद्ब्रह्मविदांकुलेब्रह्मविदोजायंतेतस्मात्ब्रह्मवित्पुत्रपौत्रादिफलजनकत्वात्यो

---

भा० । मुक्तेभ्योपिमनुष्येभ्योदेवाएवगुणाधिकाः । तेभ्योवायुस्ततोविष्णुःपरिपूर्णगुणस्सदा । येत्वेतदन्यथाविद्युस्तेहियांत्यधरंतमः । येत्वेतदेवंजानंतितेयांतिपरमंहरिमितिच । देवानांसंततौजाताःप्रायशोज्ञानिनःकृते । बलवद्धेतुतश्चान्येयस्माद्ब्रह्मविदःसुराः । नसंततौब्रह्मविदोनराणांज्ञानिनामपि । प्रायशःस्युःसुराणांचनियमोयंकृतेयुगे । तस्मात्सभगवान्विष्णुर्ज्ञेयःसर्वोत्तमोत्तमः । सदासर्वगुणैःपूर्णोयोनंतःपुरुषोत्तमइतिच ।

भगवत्त्वादिविशेषणविशिष्टःसविष्णुर्ज्ञेयइत्यन्वयः ॥ **ततश्चायंमंत्रार्थः** ॥ यःएतत्तदेतत्सत्यमित्यादिनोक्तंपरमंब्रह्मवेद सःब्रह्मैव स्वयोग्यतानुसारेणबृंहितएवभवति । नतुब्रह्मात्मकः । अस्यब्रह्मज्ञानिनःकुलेअब्रह्मवित्ब्रह्मज्ञानशून्योनभवति । किंतुदेवपक्षेप्रायेणब्रह्मज्ञानिनएवभवंति । मनुष्यपक्षेतुकदाचित्ब्रह्मज्ञानीभवति । शोकंदुःखंतरति । पाप्मानंतरति । गुहाग्रंथिभ्यःमूलप्रकृतिसत्वादिगुणत्रयबंधलिंगशरीरेभ्योविमुक्तःअमृतःस्वरूपसुखाविर्भावरूपमुक्तिविशिष्टश्चभवतीति ॥ ९ ॥ उक्तब्रह्मविद्यायांन यःकश्चिदधिकारी । किंतुपुरुषविशेषएवेतिवक्तुंप्रतिजानीते ॥ **तदेषइति** ॥ तत्तत्र। पुरुषविशेषएवब्रह्मविद्याधिकारीत्यर्थे । एषःवक्ष्यमाणःश्लोकोमंत्रःप्रमाणंभवतीत्यर्थः । तंमंत्रमुदाहरति ॥ **क्रियावंतइति** ॥ येक्रियावंतःकामादिवर्जनपूर्वकंईश्वरार्पणबुद्ध्यास्ववर्णाश्रमोचितकर्मनिष्ठाःश्रोत्रियाःवेदाध्ययनशीलाःब्रह्मनिष्ठाःभगवद्भक्ताःस्वयंस्वतंत्रंभगवंतमुद्दिश्यजुह्वतः अग्निहोत्रादिहोमंकुर्वाणाः।क्रियावंतइत्युक्तावपिकुरुपांडवन्यायेनपृथगुक्तिः।यद्वाजुह्वतःहोमंकुर्वंतः। क्रियावंतःहोमेतरक्रियावंतइतिव्याख्येयं । एकऋषीन् । ऋत्यकइतिप्रकृतिभावान्नसंधिः। प्रधानर्षीन्। ब्रह्मविद्यासंप्रदायप्रवर्तकान्। श्रद्धयंतः श्रद्धापूर्वकमर्चयंतः । यैश्चविधिवत्शिरोव्रतंतन्नामकव्रतविशेषः चीर्णंकृतं । तेषामेवएतांपूर्वोक्तांब्रह्मविद्यां तुविशेषेणवदेत अर्थ प्रकाशनपूर्वकंवदेदित्यर्थः । भासनोपसंभाषेतिसूत्रेणभासनार्थेवदतेरात्मनेपदमितिज्ञातव्यं ॥ १० ॥ एवंवेदपुरुषःउपसन्नंशिष्यं ॥ ६३ ॥

उप० । तदेषश्लोकः । क्रियावंतःश्रोत्रियाब्रह्मनिष्ठाःस्वयंजुह्वतएकऋषींश्रद्धयंतः । तेषामेवैतांब्रह्मविद्यांवदेतशिरोव्रतंविधिवद्यैस्तुचीर्णं ॥ १० ॥

प्रतिगुरोःब्रह्मविद्योपदेशप्रकारमुक्त्वाउपसंहृतवान् । इदानीमंगिराःशौनकंप्रतिउक्तमर्थमुपसंहरति ॥ **तदेतदिति** ॥ ऋषिःअंगिराः। तत्। पदसमन्वयवाक्यसमन्वयाभ्यांपरापरविद्यागम्यं। एतत्जगत्स्रष्टृत्वादिगुणविशिष्टंसत्यंभगवंतंपुराशौनकायोवाच। एतत्पूर्वोक्तंब्रह्मअचीर्णव्रतोनाधीते । नाधीयीतेत्यर्थः ॥ एवंउपनिषदंसमाप्यवेदपुरुषोमंगलंनिबध्नाति ॥ **ॐनमइति** ॥ परमऋषिभ्यइत्यत्रऋत्यकइतिप्रकृतिभावादाद्गुणइतिनगुणः । आदराद्द्विरुक्तिः ॥ ११ ॥ **इतिषष्ठःखडः** ॥६॥ एवंसमापितभाष्योभगवानाचार्यवर्योंतेपिभगवत्प्रीत्याशासनरूपंतन्नतिस्तुतिरूपंचमंगलंनिबध्नाति ॥ **प्रीयतामिति** ॥ अहंपरमोदारसद्गुणं । एनंउक्तोपनिषत्प्रतिपाद्यंभगवंतंनमामि।सभगवान्मह्यंप्रीयतां। प्रागप्रीतःप्रीयतामितिनप्रार्थ्यते । किंतुनित्यमतिशयेनप्रीतइतिभावेनोक्तंममसदाप्रेष्टप्रेष्टतमइति । अतिशयेनप्रीतःप्रेष्टः अतिशयेनप्रेष्टःप्रेष्टतमः प्रेष्टात्प्रेष्टतमः निरतिशयप्रियइत्यर्थइत्यशेषमतिमंगलं ॥ तातश्रीतिर्मलाचार्यगुरुप्रोक्तोयमाशयः। आथर्वणोपनिषदस्तद्भाष्यस्यापिदर्शितः॥१॥ इतिश्रीमत्तिर्मलाचार्यसूरिसूनुकृष्णाचार्यसूरिविरचितंश्रीमदाथर्वणोपनिषद्भाष्यविवरणंसंपूर्णं ॥ ॥ ७ ॥

अयं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितः शाकः १८२४ सन १९०३.

उप० । तदेतत्सत्यमृषिरंगिराःपुरोवाच । नैतदचीर्णव्रतोधीते । ॐनमःपरमऋषिभ्योनमःपरमऋषिभ्यः ॥ ११ ॥ आथर्वणोपनिषत्समाप्ता ॥
भा०। प्रीयतांभगवान्मह्यंप्रेष्टप्रेष्टतमःसदा । ममनित्यंनमाम्येनंपरमोदारसद्गुणं ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितमाथर्वणोपनिषद्भाष्यंसंपूर्णं ॥

